ओ३म्

ब्राह्मदेयाप्रदानविधिः ॥

अथवा-प्रसिद्धितो

# विवाहविधिः ॥

मातृकापूजन-तद्धवनविधि-कन्यासंस्कारादिविधिसहितः

संस्कर्तृसंगृहीतोपयुक्तैतद् गृह्यसूत्रार्थालङ्कृतो

राजकीयपाठशाला-भूतपूर्वमुख्याध्यापक-कल्लेत्युपाह्व-

पण्डितनाथरामशास्त्रिसंस्कृतः शोधितश्च ॥

सोऽयं

पण्डितमाधवराम-केशवरामाभ्यां श्रीनगरान्तर्वर्ति-

कोठीबागस्थितस्वकीयमार्कण्टायलमुद्रणालये

मुद्रितः प्रकाशितश्च ॥ विक्रमसंवत् १९६६

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २० | ६ | त्वान्त्रि | त्वात्त्रि |
| २१ | १४ | स्वहा | स्वाहा |
| २२ | १ | स्वहा | स्वाहा |
| ३६ | ११ | मद्यो | नतु मद्यो |
| ३६ | १२ | गृहे वा | गृहेऽपि |
| ४४ | १६ | प्रह | प्राह |
| ४६ | १७ | पवित्रण | पवित्रेण |
| ५३ | ७ | वत्तम् | वत्तमम् |
| ५४ | १० | दिभ्योः | दिभ्यो |
| ६० | ४ | दयून् | द्यून् |
| ६७ | ६ | अमुष्या | आमुष्या |
| ७१ | १० | ध्युदव | धुदव |
| ७४ | १३ | विंशी | विंशी |
| १०० | ४ | सप्तदश्यान् | सप्तदश्या |
| १०१ | ११ | नङ् | नङ् |
| १०४ | १२ | दस्त्वाय | दस्त्वाया |
| १०६ | ७ | श्वश्रां | श्वश्वां |
| १०६ | ४ | ऽयायुष्यं | ऽयायुषं |

॥ ओ३म् ॥

॥ राधाकृष्णौ मङ्गलं मे भवेताम् ॥



अथ

# कन्यासंस्कारविधिः ॥



अश्मचूर्णेन ग्रहमण्डलमुल्लिख्य । ऐशान्यां देवताकुम्भं तत्क्षेत्रेशंच संस्थाप्य दक्षे क्षेत्रेशद्वयं च न्यस्य । वषट्ते विष्ण० इति मंत्रान्तं कलशपूजां कृत्वा । प्रधानानि । ब्रह्मा देवानां० ॥ ब्राह्म्यै नमः माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै नारसिंह्यै ऐन्द्र्यै नमः ॥ ७ ॥ गौरीर्मिमाय० । गौर्यै नमः पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै नमः ॥ ७ ॥ दिव्यं सुपर्ण० ।

देवसेनायै नमः स्वधायै स्वाहायै मातृभ्यः लोकमातृभ्यः धृत्यै तुष्ट्यै नमः ॥ ७ ॥ जातवेदसे० । पुष्ट्यै नमः आत्मदेवतायै नमः ॥ २ ॥ ये के च ज्मा० । ललितायै नमः उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भगाद्यै भगाद्यै ॥ ७ ॥ राकामहं० । अनुमत्यै नमः राकायै सिनीवाल्यै कुह्वै धात्र्यै सर्वेश्वर्यै अन्नेश्वर्यै नमः ॥ ७ ॥ देवताकुम्भे ॥ यो विश्वचक्षु० । एकान्तवासिन्यै नमः ॥ क्षेत्रेशदेवतापात्रे । क्षेत्रस्य पतिना० । गणानां त्वा० । दुर्गाक्षेत्रगणेश्वरदेवताभ्यो नमः ॥ (कन्यासंस्कारविषये) ये के च ज्मा० ॥ सीमन्तकरणसटोद्धरणयागदेवताभ्यो नमः ॥ इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । नह्यस्या अपरञ्चन जरसामरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ इन्द्राणीयागदेवताभ्यो नमः ॥ इन्द्राय नमः इन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै पुष्ट्यै 'विश्वावसवे गन्धर्वराजाय, गोदानदेवताभ्यः नमः ॥ ६ ॥ अलक्ष्मीनिर्णोदनदेवताभ्यः नमः ॥ अर्यम्णे प्रजापतये हविष्यकल्पदेव-

ताभ्यः नमः ॥ इन्द्राण्यै नमः वरुणान्यै गन्धर्वाण्यै उदकान्यै 'अग्नये जीवपुत्राय' प्रजापतये महाराजाय स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्यपुण्याहदेवताभ्यः नमः ॥ ११॥
(कन्याया विवाहात्पूर्वरात्रिकर्तव्ययागे) अग्नये नमः सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये नमः ॥ १२ ॥
(वरस्य विवाहपूर्वरात्रिकर्तव्ययागे) अग्नये नमः सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवणाय ईशानाय ॥ १५ ॥ अग्निनारयिमश्नवत्० । प्रजापतेनहि० । पूर्वेद्युः कर्मदेवताभ्यो नमः ॥ अग्निना रयिमश्नवत्० । प्रजापते नहि० । प्रास्थानिकयाग देवताभ्यः नमः । (जातकर्मादिविषये) हिरण्यगर्भः०। संवत्सरस्य प्रतिमां ये त्वा रात्र्युपासते । तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज नमः । काय नमः । कस्मै नमः । कतमस्मै नमः

प्रजापतये नमः । प्रजापते इतिद्वाभ्याम् । प्रजापते नहि त्वदन्यः० । असावमुष्य पुत्रोऽमुष्यासौ पुत्रो वयं स्याम पतयो रयीणाम् नमः । जातकरणदेवताभ्यो नमः ॥ कयानश्चित्र० । कस्त्वा सत्यो० । कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहुः काचिदृष्वः । पुरो दाशुषे विचयिष्ठो अंहोथादधाति द्रविणं जनित्रे नमः ॥ प्रजापतये नमः । प्रजापते नहि० । असावमुष्य पुत्रो० ॥ काय प्रजापतये नामकरणदेवताभ्यो नमः ॥

(जातकरणदेवनाभ्यः, काय प्रजापतये नामकरणदेवताभ्यः इति कलशपूजायां योज्यं । यदि एतत्संस्कारद्वयमपि कर्तव्यं स्यात्) ॥ तद्विष्णोः० वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः नमः ॥ यतइन्द्र भयामहे० ॥ इन्द्रापर्वता० ॥ ऐन्द्राग्नं० तावत् । सावित्राणीतिमधुपर्कः । महागणपतये इत्यादीनि सर्वाणि नामानि ॐ नमो नैवेद्यं निवेदयामि नमः ॥ हिरण्यगर्भः० ॥ ८ ॥ अर्चन्तस्त्वा० ॥

(यजमानमानीय) आसनशोधनं० ॥ अ नाभौ० ।

तीर्थे स्नेयं० । वसो पवित्रं० । आशीर्वादं । कंकणबन्धनं । परमात्मने० । स्वप्रकाशो० । वनस्पति० । नमो धर्म० । यत्रास्ति माता० अद्य तावत् महागणपतये० पितृगणदेवनाभ्यः । ब्राह्म्यै माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै नारसिंह्यै ऐन्द्र्यै गौर्यै पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै देवसेनायै स्वधायै स्वाहायै मातृभ्यः लोकमातृभ्यः धृत्यै तुष्ट्यै पुष्ट्यै आत्मदेवतायै ललितायै उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भगाह्यै भगाद्यै अनुमत्यै राकायै सिनीवाल्यै कुह्वै धात्र्यै सर्वेश्वर्यै अन्नेश्वर्यै एकान्तवासिन्यै मातृमण्डलदेवताभ्यः दुर्गाक्षेत्रगणेश्वरदेवताभ्यः ॥ सीमन्तकरणसटोद्धरणदेवताभ्यः । इन्द्राणीयागदेवताभ्यः । इन्द्राय इन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै पुष्ट्यै 'विश्वावसवे गन्धर्वराजाय, गोदानदेवताभ्यः । अलक्ष्मीनिर्णोदनदेवताभ्यः । अर्यम्णे प्रजापतये हविष्यकल्पदेवताभ्यः । इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै 'अग्नये-जीवपुत्राय, प्रजापतये महाराजाय

स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्यपुण्याहदेवताभ्यः । अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये । कन्याया विवाहपूर्वरात्रिकर्तव्ययागदेवताभ्यः ॥ अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवणाय ईशानाय । वरस्य विवाहपूर्वरात्रिकर्तव्ययागदेवताभ्यः॥ अग्नये पुष्टिपतये प्रजापतये पूर्वेद्युःकर्मदेवताभ्यः ॥ अग्नये पुष्टिपतये प्रजापतये प्रास्थानिकयागदेवताभ्यः ॥ वासुदेवाय० विष्णुपञ्चायतनदेवताभ्यः ॥ इन्द्राय वज्रहस्ताय० ॥ हेरुकादिभ्यो वटुकादिभ्यः धूपो नमः दीपो नमः ॥ अपसव्येन । समस्तमातापितृभ्यः० । सव्येन । गायत्र्यै नमः ओंभूर्भुवःस्वः० ३ ॥ सुभगायै विद्महे० ३ ॥ अद्य तावत् । महागणपतेः० ॥ ब्राह्म्याः माहेश्वर्याः कौमार्याः वैष्णव्याः वाराह्याः नारसिंह्याः ऐन्द्याः गौर्याः पद्मायाः शच्याः मेधायाः सावित्र्याः विजयायाः

जयायाः देवसेनायाः स्वधायाः स्वाहायाः मातॄणां लोकमातॄणां धृतेः तुष्टेः पुष्टेः आत्मदेवतायाः ललितायाः उमायाः गौर्याः अम्बिकायाः सलिलाश्रयायाः भगाह्याः भगाद्याः अनुमत्याः राकायाः सिनीवाल्याः कुह्वाः धात्र्याः सर्वैश्वर्याः अन्नेश्वर्याः एकान्तवासिन्याः मातृमण्डलदेवतानां दुर्गाक्षेत्रगणेश्वरदेवतानां ॥ सीमन्तकरण-सर्वोद्धरणदेवतानां इन्द्राणीयागदेवतानां इन्द्रस्य इन्द्राण्याः कामस्य भगस्य ह्रियाः श्रियाः लक्ष्म्याः पुष्ट्याः 'विश्वावसोः-गन्धर्वराजस्य' गोदानदेवतानां अलक्ष्मीनिर्णोदनदेवतानां अर्यम्णः प्रजापतेः हविष्यकल्पदेवतानां इन्द्राण्याः वरुणान्याः गन्धर्वाण्याः उदकान्याः 'अग्नेः-जीवपुत्रस्य' प्रजापतेः महाराजस्य स्कन्दस्य अर्यम्णः भगस्य प्रजानकस्य हविष्यपुण्याहदेवतानां अग्नेः सोमस्य मित्रस्य वरुणस्य इंद्रस्य उदकस्य भगस्य अर्यम्णः पूष्णः त्वष्टुः राज्ञः प्रजापतेः । कन्याया विवाहपूर्वरात्रियागदेवतानां । अग्नेः सोमस्य मित्रस्य वरुणस्य इन्द्रस्य

उदकस्य भगस्य अर्यम्णः पूषणः त्वष्टुः राज्ञः प्रजापतेः कुम्भस्य वैश्रवणस्य ईशानस्य । वरस्य विवाहपूर्वरात्रियागदेवतानां ॥ अग्नेः पुष्टिपतेः प्रजापतेः पूर्वेद्युःकर्मदेवतानाम् । अग्नेः पुष्टिपतेः प्रजापतेः प्रास्थानिकयागदेवतानां वासुदेवस्य० विष्णुपञ्चायतनदेवतानां । इन्द्रस्य वज्रहस्तस्य० हेरुकादीनां० । आत्मनो वाञ्छनः० मातृकादेवीसन्तोषणार्थमर्चामहं करिष्ये ॐकुरुष्व ॥ महागणपतेरिदमासनम् नमः इत्यादि ॥

महागणपतये० युष्मान् पूजयामि ॐपूजय । महागणपतिं० ब्राह्मीं माहेश्वरीं कौमारीं वैष्णवीं वाराहीं नारसिंहीं ऐन्द्रीं गौरीं पद्मां शचीं मेधां सावित्रीं विजयां जयां देवसेनां स्वधां स्वाहां मातॄः लोकमातॄः धृतिं तुष्टिं पुष्टिं आत्मदेवतां ललितां उमां गौरीं अम्बिकां सलिलाश्रयां भगार्हीं भगार्च्चीं अनुमतिं राकां सिनीवालीं कुहूं धात्रीं सर्वेश्वरीं अन्नेश्वरीं एकान्तवासिनीं मातृमण्डलदेवताः दुर्गाक्षेत्रगणेश्वरदेवताः ॥ सीमन्तकरण सटोद्धरण-

देवताः इन्द्राणीयागदेवताः इन्द्रं इन्द्राणीं कामं भगं ह्रियं श्रियं लक्ष्मीं पुष्टिं 'विश्वावसुं–गन्धर्वराजं' गोदानदेवताः अलक्ष्मीनिर्णोदनदेवताः अर्यमणं प्रजापतिं हविष्यकल्पदेवताः इन्द्राणीं वरुणानीं गन्धर्वाणीं उदकानीं 'अग्निं–जीवपुत्रं' प्रजापतिं महाराजं स्कन्दं अर्यमणं भगं प्रजानकं हविष्यपुण्याहदेवताः अग्निं सोमं मित्रं वरुणं इन्द्रं उदकं भगं अर्यमणं पूषणं त्वष्टारं राजानं प्रजापतिं अग्निं सोमं मित्रं वरुणं इन्द्रं उदकं भगं अर्यमणं पूषणं त्वष्टारं राजानं प्रजापतिम् कुम्भं वैश्रवणं ईशानं अग्निं पुष्टिपतिं प्रजापतिं पूर्वेद्युःकर्मदेवताः । अग्निं पुष्टिपतिं प्रजापतिं प्रास्थानिकयागदेवताः वासुदेवं० विष्णुपञ्चायतनदेवताः इन्द्रं वज्रहस्तं० हेरुकादीन्० एता देवता आवाहयिष्यामि ओं आवाहय॥ पाद्यार्थे उदकं नमः । शन्नो देवी० । लाजाश्च० । महागणपतये पाद्यं नमः सर्वाणि नामानि॥ पुनः शन्नो देवी०। आपः क्षीरं०। महागणपते० ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि नार-

सिंहि ऐन्द्रि गौरि पद्मे शचि मेधे सावित्रि विजये जये देवसे-
ने स्वधे स्वाहे मातरः लोकमातरः धृते तुष्टे पुष्टे आत्मदेवते ल-
लिते उमे गौरि अम्बिके सलिलाश्रये भगाह्वि भगाह्वि अनुमते
राके सिनीवालि कुहु धात्रि सर्वेश्वरि अन्नेश्वरि एकान्तवासिनि
मातृमण्डलदेवताः दुर्गाक्षेत्रगणेश्वरदेवताः सीमन्तकरणसटोद्धर-
णदेवताः इन्द्राणीयागदेवताः इन्द्र इन्द्राणि काम भग ह्रीः श्रीः
लक्ष्मि पुष्टे 'विश्वावसो–गन्धर्वराज' गोदानदेवताः अलक्ष्मी-
निर्णोदनदेवताः अर्यमन् प्रजापते हविष्यकल्पदेवताः । इन्द्राणि
वरुणानि गन्धर्वाणि उदकाणि 'अग्ने–जीवपुत्र' प्रजापते महा-
राज स्कन्द अर्यमन् भग प्रजानक हविष्यपुण्याहदेवताः । अग्ने
सोम मित्र वरुण इन्द्र उदक भग अर्यमन् पूषन् त्वष्टः राजन्
प्रजापते कन्यायाः पूर्वरात्रियागदेवताः । अग्ने सोम मित्र वरुण
इन्द्र उदक भग अर्यमन् पूषन् त्वष्टः राजन् प्रजापते कुम्भ
वैश्रवण ईशान वरस्य पूर्वरात्रियागदेवताः । अग्ने पुष्टिपते

प्रजापते पूर्वेद्युःकर्मदेवताः । अग्ने पुष्टिपते प्रजापते प्रास्थानिकयागदेवताः । वासुदेव० विष्णुपञ्चायतनदेवताः ॥ इन्द्र वज्रहस्त० । हेरुकाद्यः० । इदं वोऽर्घ्यं नमः ॥

महागणपतये समालभनं गन्धो नमः ॥ एवं महागणपतये० । अर्घो नमः पुष्पं नमः ॥ एवं धूपदीपादि सर्वं दक्षिणान्तम् ॥ तद्विष्णोः० । जातवेदसे० इति च कलशं पुष्पाणि ॥



अथाग्निकर्म ॥ पात्रं तिला० । परिसमुह्य० पर्युक्ष्य परिषिच्य परिस्तीर्य । आदौ पञ्च० । अग्नये समनमत्० ८ ॥ उत्तरतः संस्तीर्णे० । सावित्राणि महागणपतये ब्राह्म्यै० (इत्यादीनि सर्वनामानि पूर्वोक्तानि । नच कन्यासंस्कारनामानि ) वासुदेवाय । इन्द्राय वज्रहस्ताय० । हेरुकादिभ्यो वटुकादिभ्यः जुष्टं निर्वपामि । एवं प्रोक्षामि । पृश्नयाः पयोसि० । आज्यदर्शनं । महागणपतये ब्राह्मयै इत्यादि नामानि इदमाज्यमर्प० ॥

आज्यभागान्तं । गणपतिध्यानं । निषुसीदेत्यन्नहोमं वषट्ते विष्ण इतिमन्त्रान्तं विधाय प्रधानाहुतीर्दद्यात् । ब्रह्मादेवानां० ब्राह्म्यै स्वाहेत्यादि ७ ॥ गौरीर्मिमाय० गौर्यैस्वाहेत्यादि ७ ॥ दिव्यंसुपर्णं० देवसेनायै इत्यादि ७ ॥ जातवेदसे० पुष्ट्यै आत्मदेवतायै २ ॥ ये के च ज्मा० ललितायै इत्यादि ७ ॥ राकामहं० अनुमत्यै ७ ॥ यो विश्वचक्षुः० एकान्तवासिन्यै स्वाहेति १ ॥ क्षेत्रस्य पतिना० गणानां त्वा० दुर्गाक्षेत्रगणेश्वरदेवताभ्यः स्वाहा ॥ तद्विष्णोः० वासुदेवाय स्वाहेत्यादि । यत इन्द्र० । इन्द्रापर्वता० ऐन्द्राग्नं० ॥

(यजमानपत्नीमानीय मातृकापूजनं कारयेत् यथा)

तीर्थे स्नेयं० । वसोपवित्रं० आशीर्वादं । परमात्मने० । यत्रास्ति माता० ॥ अद्य तावत् महागणपतये ब्राह्म्यै० धूपदीपसंकल्पात्० ॥ [ गणेशार्थं मृत्तिपिण्डमूर्तिं संस्थाप्य । आद्याः पञ्च घृतैः प्रोक्ताः मधुमांसान्वितं द्वयम् । दधिक्राव्णेति मन्त्रेण वर्तयेद्भक्तगोलकान् । आनो भद्रेति सूक्तेन स्थापयेदन्नगोलकान् ॥ आनोभद्रेति पठि-

त्वाऽनुमत्यै नमः ७ (इत्येवं सप्त) पात्रान्तरे तु तदन्नं नैवेद्यार्थं तु स्थापयेत् ॥ ब्राह्म्याद्याः सप्तात्तोटेषु घृतधारासु सप्त च । गौर्याद्या, देवसेनाद्याः शिरोवस्त्रे विचित्रिते । पुष्ट्यात्मदेवते स्वस्मिँल्ललिताद्याश्च कुड्यके भक्तपिण्डेष्वनुमत्याद्याश्च सप्ताथ कुम्भके । एकान्तवासिनीत्येवं मातृकार्चनभूमिकाः ॥ एवं संस्थाप्य ]

संव्वः सृजामि० । अश्विनोः० । गायत्र्यै नमः ओंभूर्भुवः स्वः० ३ ॥ सुभगायै विद्महे० ३ ॥ महागणपतेः द्वारदेवतानां । ब्राह्म्याः० । मातृमण्डलदेवतानां आत्मनो० मातृकादेवीसन्तोषणार्थं अर्चामहं करिष्ये० । दक्षिणान्तं कृत्वा । भद्रं पश्येमेति प्रदक्षिणत्रयं च कृत्वाज्यदर्शनं कुर्यात् ॥ पुनर्यजमानमानीय । (पशूपहारमनु ।) पूर्ववत् आज्यहोमं तर्पणं च, कुर्यात् ॥

ततः ओंकारो यस्येति यवातिलहोमं तर्पणं पुरुषसूक्तं लक्ष्मीसूक्तं रुद्रमन्त्रं च सतर्पणं विधाय कन्यायाः वरस्य वा स्नानं कार्यम् ॥ ततः स्वस्तिकरेखायां पीठिकां निधाय पूजयेत् ॥

तीर्थे स्नेयं० । इत्यादि० । यत्रास्ति माता० ॥ धात्र्यै विधात्र्यै देहल्यै विश्वशक्त्यै मायाशक्त्यै [अथवा] पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः, अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छ० , दिवे सूर्याय सामवेदाय ब्रह्मणे छ० दिग्भ्यः चन्द्रमसे अथर्ववेदाय ब्रह्मणे छन्दोभ्यः धूपदीपसंकल्पात् सिद्धिरस्तु धूपो नमः दीपो नमः ॥ संव्वः सृजामि० । अश्विनोः० । ॐगायत्र्यै नमः ॐभूर्भुवःस्वः० ३ ॥ अद्य तावत्० । धात्र्याः विधात्र्याः देहल्याः विश्वशक्त्याः मायाशक्त्याः (अथवा) पृथिव्याः अग्नेः ऋग्वेदस्य ब्रह्मणः छन्दसां अन्तरिक्षस्य वायोः यजुर्वेदस्य ब्रह्मणः छन्दसां दिवः सूर्यस्य सामवेदस्य ब्रह्मणः छन्दसां दिशां चन्द्रमसः अथर्ववेदस्य ब्रह्मणः छन्दसां आत्मनो० अर्चामहं करिष्ये । एवं आसनादि सर्वं दक्षिणान्तं ॥ ततः भद्रपीठोपविष्टयोः कन्याचतुष्कगृहीतकोणवस्त्रान्तरिते कन्याया वरस्य वा शिरसि सर्वौषधिजातीफलयुतां जलधारां क्षिपेत् ॥ सर्वगन्धैः फलोत्तरैः सशि-

रस्कं स्नापयित्वाऽहतेन वाससा प्रच्छाद्य । सावीर्हि देव० ॥ ओंगायत्र्यै नमः ओंभूर्भुवः स्वः० ३ । पूर्ववत् भद्रपीठाच्छिद्रम् ॥ स्नापयित्वाग्निमण्डपमानीय कन्यां वरं वा । या आपो दिव्याः० । तिलकं । आज्यदर्शनं । देवीसूक्तं । रक्षोघ्नमन्त्रं च विधाय । ऋतुतिथ्यादि । नैवेद्यं सावित्राणि महागणपतये ब्राह्म्यै इत्यादि० ओं नमो नैवेद्यं निवेदयामि नमः ॥ तन्त्रसमाप्तिः ॥ विमुच्य । नयामि ॥ (कन्यासंस्काराभावेऽत्रैव पूर्णादौ ब्राह्मणपूजनं पूर्णान्ते वैश्वदेवादि नान्दीमुखादि च कर्तव्यमिति) ॥ इति मातृकायागविधिः ॥

अथ कन्यासंस्कारः ॥ आदौ सीमन्तकरणसटोद्धरणयागः । १ । परिसमुह्य पर्युक्ष्य परिषिच्य ॥ परिस्तीर्य ॥ आदौ पश्च० ॥ न निर्वापः । पृश्न्याः पयोसि । आज्यदर्शनम् । आत्मनो० सीमन्तकरणसटोद्धरणयागदेवताभ्यः इदमाज्यमर्पयामिनमः ॥ आज्यभागान्ते (पश्चादग्नेर्दर्भेषु प्राङ्मासीनायाः सर्वान्केशान्प्रमुच्य

प्रसाधयते) ॥ यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परिवर्ज वपंस्ते । स्त्रीषु रूपमाश्विनौ तन्निधत्तं पौंस्नेनेमं संसृजतं वीर्येण ॥ इन्द्राणी चक्रे कङ्कतं ससीमन्तं विसर्पतु । पुनः पतिभ्यो जायन्दा अग्ने प्रजया सह ॥ पुनः पत्नीमग्निरदादाऽऽयुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् इति ॥ [त्रिःश्वेतया शलल्या शमीशाखया सपलशया वा सीमन्तं विचिनोति यास्ते राक इति । ] यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ [नीललोहितेन सूत्रेण केशान्ग्रन्थयेत् ॥] नीललोहितं भवति कृत्यासक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् ॥ या आपो दिव्याः० । ये के च ज्मेत्याज्यप्रधानम् । ऋतुतिथ्यादितंत्रसमाप्तिः ॥ विमुच्य नयामि ॥ इति सीमन्तकरणसटोद्धरणम् ॥ १ ॥

—:*:*:❀:*:*:—

अथ इन्द्राणीयागः ॥ परिसमुह्य पर्युक्ष्य परिषिच्य ॥ परिस्तीर्य ॥ आदौ पञ्च० । न निर्वापः । पृश्नयाः पयोसि० आत्मनो० इन्द्राणीयागदेवताभ्यः इदमाज्यमर्पयामि नमः ॥ आज्यभागान्ते । या आपो दिव्याः० ॥ आज्यप्रधानं । इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । न ह्यस्या अपरञ्चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥ ऋतुतिथ्यादितंत्रसमाप्तिः ॥ इति इन्द्राणीयागः ॥ २ ॥

—:*:*:—

अथ गोदानम् ॥ परिसमुह्य पर्युक्ष्य परिषिच्य ॥ परिस्तीर्य ॥ आदौ पञ्च० । उत्तरतः० ॥ इन्द्राय इन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै पुष्ट्यै 'विश्वावसवे-गन्धर्वराजाय' (गोदानदेवताभ्यः) ॥ ६ ॥ जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यदर्शनम् । आत्मनो० इन्द्रायेत्यादिभ्यः६ इदमाज्यमर्प० ॥ आज्यभागान्ते । (ततः पात्रे दातव्यमलङ्करणादि अन्यदपि सर्वं च ए-

कत्रीकृत्य यजमानः हिरण्यवर्णाः शुचयः० १ । यासां देवा० २ । यासां राजा० ३ । शिवेन मा० ४ । इति, आपो हिष्ठाः० ३ । इममग्न आयुषे० । शन्नो देवी ० । इति चाभिषिच्य कन्यायै संकल्पपूर्वकं दद्यात् ॥ ) सावित्राणि० अद्य तावत् आत्मनो० ऋणत्रयविमोचनार्थमिमानि सूर्य सोमाग्नि प्रजापति मरुद्गणदैवतानि यौतकदेयानि सौवर्ण राजतालङ्करणानि, कर्ण कण्ठ नासा वेणी-भूषण ताटङ्क हार कटक कंकण केयूराङ्गुलीयकादीनि, रूप्यकांस्यरीतिधातुमयानि कंस कमण्डलु कर्करी भोजनपानपात्रादीनि, नानाविधानि कौशेय राङ्कवादीनि वस्त्राणि, अन्यानि उपकरणजातानि च, यथाशक्ति कन्यायै ददानि ३, (स्वस्था भव सुखिनी भव पुण्यवती भव यशस्विनी भव ॥) प्रतिगृह्णामीति स्वस्त्यस्तु ते इति च कन्या प्रतिब्रूयात् ॥ क इदं कस्मै अदात्, कामः कामाय, कामो दाता, कामः प्रतिग्रहीता, कामः समुद्रमाविशत्, कामेन त्वा प्रतिगृह्णामि, कामैतत्तेऽस्तु ॥

(ततो गोदानिकैर्मन्त्रैः कन्यामलंकृत्य चतुष्पादे भद्रपीठे गुरोः दक्षिणतः प्राङासीनामविधवाः स्त्रियः चतस्रः माता पिता गुरुश्च सप्तमस्तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति ॥) (सर्वगन्धमिश्रितैर्दक्षिणपाणिस्थैर्वारिपूर्णकलशैः या आपो दिव्या इति द्वाभ्यामेना व्याघ्रमिति च स्नानम्) या आपो दिव्याः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवासः । तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ १ ॥ अभि त्वा वर्चसासिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा त्वा सविताकरत् ॥ २ ॥ एना व्याघ्रं परिषस्वजानं सिंहं हिन्वन्ति महते धनाय । मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषन्न सुत्वस्तस्थिवांसम् ॥ १ ॥ स्थालीपाकेन प्रधानानि— तेजोसि० ॥ इन्द्राय स्वाहा, इन्द्राण्यै, कामाय, भगाय, ह्रियै, श्रियै, लक्ष्म्यै, पुष्ट्यै, विश्वावसवे-गन्धर्वराजाय स्वाहा, ।६। (प्रधानानन्तरं वादित्राणि गन्धोदकेन समुपलिप्य कन्या पूर्वं वाद-

यते ) ॥ ( स्वनं ) शुनं वद दुन्दुभे सुप्रजस्त्वाय गोमुख । प्रक्रीडयन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या कृतमङ्गलाः ॥ तत ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ विमुच्य ३ नयामि ॥ इति गोदानम् ॥ ३ ॥

—:※:※:※:—

अथालक्ष्मीनिर्णोदनं ॥ त्रिकाहोमपर्यायम् । परिसमुह्य पर्युक्ष्य परिषिच्य ॥ चातुष्कोष्ठैः स्तरैः परिस्तीर्य ॥ आज्यमुत्पूय पृश्नयाः पय इति ॥ आज्यदर्शनम् । आत्मनो॰ अलक्ष्मीनिर्णोदनदेवताभ्य इदमाज्यं॰ ॥ यैः कैश्चिद्दर्भाग्रैः स्रुवं संमृज्य अत्र होमस्यानाम्नातत्वात्त्रिकादिभिर्होमः ॥ ( स्रुवेण ) तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥ १ ॥ बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ २ ॥ बृहस्पतिः समजयद्वसूनि महोव्रजान्गोमतो देव एषः । अपः सिषासन्त्स्वरप्रतीतो बृहस्प-

तिर्हन्त्यमित्रमर्कैः ॥ ३ ॥ यमो दाधार पृथिवीं य्यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् ॥ ४ ॥ यथा पञ्च यथा षड्यथा पञ्च दशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥ ५ ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दांसि सर्वा ता यम आहिता ॥ ६ ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥ ७ ॥ अश्याम ते सुमतिं देव यज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः । सुम्ना यन्नि द्विषो अस्माकमा चरा रिष्ट वीरा जुहवाम ते हविः ॥ ८ ॥ त्वेषं वयं रुद्रं यज्ञसाधनं वङ्कुं कविमवसे नि ह्वयामहे । आरे अस्मद्दैव्यं हेळो अस्यतु सुमति मिद्वयमस्या वृणीमहे ॥ ९ ॥ अवते हेळो० ॥ १० ॥ उदुत्तमं वरुण० ॥ ११ ॥ इमं मे वरुण० ॥ १२ ॥ तत्त्वायामि० ॥ १३ ॥ ओंभूर्लोकाय स्वाहा ॥ १४ ॥ ओंभुवर्लोकाय स्वाहा ॥ १५ ॥ ओंस्वर्लोकाय स्वाहा ॥ १६ ॥ ओंभूर्भुवः स्वर्लो-

काय स्वाहा ॥ १७ ॥ अग्निर्मूर्धा० ॥ १८ ॥ उभा वामिन्द्राग्नी०॥१९॥ अयमिह० ॥ २० ॥ अयं ते योनि० ॥ २१ स्तोमो देवानां । उप प्रयन्तो० ॥ २२ ॥ अस्य प्रत्ना० ॥ २३ ॥ अरुणेः । कदाचनस्तरी० ॥ २४ ॥ (आज्यदर्शनस्य अक्षोटेन सहिताहुतिः)। परि ते दूळभो० ॥ २५ ॥ (यज्ञियस्य वृक्षस्य प्रागायतनां शाखां सूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति गुरुः ॥ ) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रयच्छामीति कन्यायै प्रददाति गुरुः ॥ (ततो गृहीतशाखां कन्यां मंत्रयते गुरुः ॥) या तेऽलक्ष्मीर्मातृमयी पितृमयी संक्रामणी सहजा वापि काचित् । तां तिष्येण सह देवतया निर्भजामि निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नम इति ॥ (तस्या उत्सर्गः स्थावरोदके शुचौ वा देशे देवतायतने) ॥ विमुच्य नयामि ॥ इत्यलक्ष्मीनिर्णोदनम ॥ ४ ॥



अथ हविष्यकल्पः ॥ परिसमुह्य पर्युक्ष्य परिषिच्य ॥ परिस्तीर्य ॥ अद्यौ पञ्च० । उत्तरतः० ॥ अर्यम्णे जुष्टं निर्वपामि । प्रजापतये जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यदर्शनं । आत्मनो० अर्यम्णे प्रजापतये (हविष्यकल्पदेवताभ्यः) इदमाज्यमर्प० ॥ आज्यभागान्ते । या आपोदिव्याः० ॥ प्रधानं । अर्यम्णे स्वाहा (इति दक्षिणे) प्रजापतये स्वाहा (इत्युत्तरे) ॥ प्रधानानन्तरं कुंकुमचन्दनादिसुगन्धद्रव्यसहिताः स्रुवेणाज्याहुतीः सप्तदश जुहुयात् । अग्नये स्वाहा । सोमाय । वरुणाय । मित्राय । इन्द्राय । बृहस्पतये । स्कन्दाय । रुद्राय । वात्सीपुत्राय । भगाय । भगनक्षत्रेभ्यः । काल्यै । षष्ठ्यै । भद्रकाल्यै । पूष्णे । त्वष्ट्रे । महिषिकायै स्वाहा ॥ १७ ॥ ऋतुतिथ्यादितंत्रसमाप्तिः ॥

इति हविष्यकल्पः ॥ ५ ॥

—:※:※:—

अथ हविष्यपुण्याहः ॥ परिसमुह्य पर्युक्ष्य परिषिच्य ॥

परिस्तीर्य ॥ आदौ पञ्च० ॥ उत्तरतः० ॥ इन्द्राण्यै, वरुणान्यै, गन्धर्वाण्यै, उदकान्यै, अग्नये-जीवपुत्राय, प्रजापतये, महाराजाय, स्कन्दाय, अर्यम्णे, भगाय, प्रजानकाय११, (हविष्यपुण्याहदेवताभ्यः) जुष्टं निर्वपामि ॥ एवं प्रोक्षामि ॥ आज्यदर्शनम् । आत्मनो० इन्द्राण्यै ॥ ११ ॥ इदमाज्यमर्प० ॥ आज्यभागान्ते । या आपो दिव्याः० । प्रधानानि । इन्द्राण्यै स्वाहा । इत्यादीनि ॥ ११ ॥ ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इति हविष्यपुण्याहः ॥ ६ ॥

—:*:*:—

अथ कन्याया विवाहात्पूर्वरात्रिकर्तव्ययागः ॥ परिसमुह्य पर्युक्ष्य परिषिच्य ॥ आदौ पञ्च० । उत्तरतः संस्तीर्णे० सावित्राणि० । अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये ॥ १२ ॥ जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यदर्शनम् ॥ आत्मनो० । आज्यभागान्ते । या आपो दिव्याः० ॥ प्रधानानि । अग्नये स्वाहा इत्यादीनि ॥ १२ ॥

ऋतुतिथ्यादितंत्रसमाप्तिः ॥ इति ॥ ७ ॥



अथ वरस्य विवाहात्पूर्वरात्रिकर्तव्ययागः ॥ परिसमुह्य पर्युक्ष्य परिषिच्य ॥ आदौ पञ्च० ॥ उत्तरतः० ॥ अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवणाय ईशानाय १५ जुष्टं निर्वपामि एवं प्रोक्षामि ॥ आज्यदर्शनम् ॥ आज्यभागान्ते ॥ या आपो दिव्याः० । प्रधानानि । अग्नये इत्यादीनि ॥ १५ ॥ ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ विमुच्य ॥ नयामि ॥ ८ ॥

पूर्वेद्युःकर्म गेयनृत्तानुमंत्रणं नामेदम् ॥ परिसमुह्य पर्युक्ष्य परिषिच्य । परिस्तीर्य । आदौ पंच० । उत्तरतःसं० । सावित्राणि० अक्षतचरुः । अग्नये पुष्टिपतये प्रजापतये जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यदर्शनम् ॥ आज्यभागान्ते ॥ (चतस्रोऽष्टौ वा अविधवाः शाकपिण्डीभिः स्त्रियोऽन्नेन च ब्राह्मणान्भोजयित्वा

वीणागायिभिः सह सङ्गायेयुरपिवा चतुरो नर्त्तनं कुर्यात् क्रीडं-
वः इति ॥) क्रीडं वः शर्धो मारुतमनर्वाणं रथे शुभम् । कण्वा
अभिप्रगायत ॥ (इति गेयनृत्तानुमंत्रणम्) प्रधान द्वयम् । अग्नि-
ना रयि० ॥ प्रजापतेनहि० ॥ तत ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ ६ ॥

अथ वरस्य प्रास्थानिकहोमः ॥ परिसमुह्य पर्युक्ष्य परिषि-
च्य ॥ परिस्तीर्य आदौ पञ्च० ॥ उत्तरतः० । अत्तनचरौ अग्नये
पुष्टिपतये प्रजापतये जुष्ट निर्वपामि । एवं प्रोक्षामि । आज्यद-
र्शनम् ॥ आत्मनो० । आज्यभागान्ते । या आपो दिव्याः० ॥
(तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिर्हुत्वा पश्चाद्गिनी सिचं
गृह्णाति शस्त्रं गृहीत्वा ॥ २ ॥ पूषामेति यान्ति यत्रोदकम् ३ ॥
शन्नोदेवीरित्युपस्पृश्य प्राचीदिगिति यान्ति यथादिशम् ॥) पूषा
मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पातु ॥
शन्नोदेवीरितिजलमुपस्पृशेत् ॥ ततः प्राचीदिगिति ॥ प्राची दि-
गग्निर्देवता अग्निं स ऋच्छतु यो मैतस्या दिशोऽभिदासति ।

दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्या० ॥ प्रतीची दिक् सोमो देवता सोमं स ऋच्छतु यो मैतस्या० ॥ उदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैत० ॥ ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मैत० ॥ इयं दिगदितिर्देवताऽदितिं स ऋच्छतु यो० ॥ ततोऽक्षतसक्तूनां प्रधानं । अग्निं पुष्टिपतिं प्रजापतिं च यजेत । अग्निना रयिं० १ ॥ प्रजापते नहि० २ ॥ ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ पूर्णामवशेषयेत् ॥ अग्नेर्यविष्ठब्राह्मणपूजनं ॥ आश्रावितमिति पूर्णां दत्त्वा विसृज्य० नयामि ॥ (यदि जातकर्म नामकर्म च कर्तव्यं स्यात्तदपि विधिपूर्वकमत्रैव विधेयम्) ॥ १० ॥

ततो वैश्वदेवं विदध्यात् तद्यथा–अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्य । यज्ञस्य सन्ततिरिति ४ स्तरैः ॥ वैश्वदेवस्य सिद्धस्य० आदावग्नये स्वाहेत्यादि० ॥ नैवेद्यम् । तत्ताय नम इत्यादि ॥ अपसव्येन दक्षिणाग्रान्दर्भानास्तीर्य समस्तमातापितृ-

भ्योऽन्नं स्वधा ॥ एवं गन्धादि च सर्वं ॥ ह्रिमपानादि० ॥ सव्येन वसन्ताय नमः इत्यादि ॥ ततः अग्नये स्विष्टकृते स्वाहा ॥ प्राणायामः । विमुच्य ३ । नयामि । धर्मं देहि धनं देहि० ॥ भगवन्यद्म० । कण्ठोपवीती । हन्तमनुष्येभ्यः० ॥

---

अथ नान्दीमुखश्राद्धविधिः । आभ्युदयिके श्राद्धे इति सर्वत्र ॥

(पूर्वाग्रान्दर्भान् दूर्वा वा आस्तीर्य ।) नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः क्षीरयवैरवनेजनं नमः । (दधिबदरयवघृतमिश्रान् पिण्डान् श्रीफलसन्निभान् कृत्वा) (सव्यं जानुं भूमौ निधाय नैर्ऋतकोणादारभ्य पूर्वान्तास्त्रयस्त्रयश्चतुःश्रेणिषु पिण्डाः ईशानकोणं तावत् स्थाप्याः ॥) जितं ते पुण्डरीकाक्ष० ३ ॥ अद्य तावत्० । नान्दीमुख्यः मातरः एष वः पिण्डो याश्चात्र वोऽन्वेतद्वो नमः । अप उपस्पृश्य । नान्दीमुख्यः पितामह्यः एष वः पिण्डो याश्चात्र वोऽन्वेतद्वो नमः ॥ अप उ० । नान्दीमुख्यः प्रपितामह्यः एष वः पिण्डः० ॥ जितं ते० ३ ॥ अद्य तावत् ।

नान्दीमुखाः पितरः एष वः पिण्डो येचात्र वोऽन्वेतद्वो नमः अप उपस्पृश्य ॥ एवमन्यत्र । नान्दीमुखाः पितामहाः एष वः पि० ॥ नान्दीमुखाः प्रपितामहाः एष वः पि० ॥ जितं ते० ३ ॥ अद्य तावत् नान्दीमुख्यः मातामह्यः एष वः पिण्डो याश्चात्र वोन्वेतद्वो नमः । अप उपस्पृश्य । नान्दीमुख्यः प्रमातामह्यः एष वः पि० । नान्दीमुख्यः वृद्धप्रमातामह्यः एष वः पि० ॥ जितं ते ३ ॥ अद्य तावत् नान्दीमुखाः मातामहाः एष वः पि० । नान्दीमुखाः प्रमातामहाः० । नान्दीमुखाः वृद्धप्रमातामहाः एष वः पिण्डो येचात्र वोनुएतद्वो नमः । अपउप० । नान्दीमुखेभ्यो द्वादशदै० शोभनं वासो नमः । नान्दीमुखेभ्यः वीरान्नं नमः । नान्दीमुखीभ्यो मातृभ्यः नान्दीमुखीभ्यः पितामहीभ्यः नान्दीमुखीभ्यः प्रपितामहीभ्यः ॥ नान्दीमुखेभ्यः पितृभ्यः । एवं पितामहेभ्यः प्रपितामहेभ्यः ॥ नान्दीमुखीभ्यः मातामहीभ्यः । नान्दीमु० प्रमातामहीभ्यः । नान्दीमु० वृद्धप्रमातामहीभ्यः ॥ नान्दीमुखेभ्यः मातामहेभ्यः इत्यादि ।

समालभनं गन्धो नमः। एवं अर्घो नमः पुष्पं नमः ॥ धूपो नमः दीपो नमः। नान्दीमुखेभ्यो द्वा० भक्ष्यभोज्यफलमूलबालिनैवेद्य- मन्नं नमः। नान्दीमुखेभ्यो० हिमपानाद्वृद्धिः क्षीरपानाद्वृद्धिः म- धुपानाद्वृद्धिः यवोदकाद्वृद्धिः उदकतर्पणाद्वृद्धिः हिमं हिमं रजतं २ । वसन्ताय नमः ६ ॥ (षड्तुतर्पणान्ते) श्रिय एवैनं तच्छ्रियमादधाति सन्ततं ऋचा वषट्कृतं । सन्तत्यै सन्धीयते प्र- जया च पशुभिर्य एवं वेद ॥ ऊर्जांसि नमस्कारं करोमि नमः ॥ यो विश्वमाद्यं भुवनस्य गोप्ता येनेदं विश्वं सचराचरं च । स वै देवो यजमानं च मां च या दक्षिणा सर्वमेतत्पुनातु इति पि- ण्डदर्शनं ॥ भद्रं पश्येम० इति च प्रदक्षिणनर्तनम् ॥ शन्नो दे- वी० । नान्दीमुखेभ्यो० दक्षिणायै यवहिरण्य रजत निष्क० ॥ नान्दीमुखा द्वादशदैवताः पितरः प्रीयन्तां प्रीता भवन्तु ॥

इति नान्दीमुखश्राद्धविधिः ॥

---

या काचिद्योगिनी० । सौरभेयाः स्वर्गहिताः० ॥ इत्यादि स-

र्वम् ॥ ये विश्वभाविनो० इत्यादिना क्षेत्रेशबलिः ॥ अपसव्येन आयुःप्रजां० ॥ ततः कलशविसर्जनं पूर्ववत् ॥ सव्येन– गायत्र्यै नमः ओंभूर्भुवःस्वः ३ । सुभगायै विद्महे० ३ । अद्यतावत्० महागणपतेः० । ब्राह्मयाः० इत्यादेः । सीमन्तकरणसटोद्धरणदेवतानां । इन्द्राणीयागदेवतानां । इन्द्रस्य इन्द्राण्याः कामस्य भगस्य ह्रियाः श्रियाः लक्ष्म्याः पुष्ट्याः विश्वावसोर्गन्धर्वराजस्य गोदानदेवतानां । अलक्ष्मीनिर्णोदनदेवतानां । अर्यम्णः प्रजापतेः हविष्यकल्पदेवतानां । इन्द्राण्याः वरुणान्याः गन्धर्वाण्याः उदकान्याः अग्नेर्जीवपुत्रस्य प्रजापतेः महाराजस्य स्कन्दस्य अर्यम्णः भगस्य प्रजानकस्य हविष्यपुण्याहदेवतानां । अग्नेः सोमस्य मित्रस्य वरुणस्य इन्द्रस्य उदकस्य भगस्य अर्यम्णः पूष्णः त्वष्टुः राज्ञः प्रजापतेः कन्याया विवाहपूर्वरात्रिकर्तव्ययागदेवतानां । अग्नेः सोमस्य मित्रस्य वरुणस्य इन्द्रस्य उदकस्य भगस्य अर्यम्णः पूष्णः त्वष्टुः राज्ञः प्रजापतेः कुम्भस्य वैश्रवणस्य ईशानस्य वरस्य विवाहपूर्व-

रात्रिकर्तव्ययागदेवतानां । अग्नेः पुष्टिपतेः प्रजापतेः पूर्वेद्युः कर्म देवतानां । अग्नेः पुष्टिपतेः प्रजापतेः प्रास्थानिकयागदेवतानां । वासुदेवादीनां विष्णुपञ्चायतन देवतानां । इन्द्रस्य वज्रहस्तस्येत्यादीनां । हेरुकादीनां वटुकादीनां आत्मनो० पूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ एताभ्यो देवताभ्यो यवोदकं नमः उदकतर्पणं नमः । आज्ञा मे दीयतां नाथ० ॥ आपन्नोस्मीत्यादि ॥ नमो ब्रह्मणे ३ इति तर्पणम् ॥ अथानुमत्यै- इत्यादि सप्तनामभिः सव्यञ्जनान्नपूर्णसप्तपात्रपूजा सप्तक्षीरपात्रपूजा वा यजमानपत्नीद्वारा विधातव्या ॥ ताभ्यश्च देवताभ्यस्तदन्ननिवेदनम् । तदन्नांशैश्च दुर्गाक्षेत्रतर्पणम् ॥ कलशाच्छिद्रात् पूर्वमेवैषा पूजा कार्या ॥ तत उदकलशमुपनिधाय स्वस्त्ययनं वाचयति ऋत्विक् ॥ ॥

इति कन्यासंस्कारविधिः समाप्तः ॥



सीमन्तकरणसटोद्धरणयागः ॥ १ ॥

तृतीये गर्भमासे सीमन्तं कारयते ॥ १ ॥ शुद्धपक्षस्य पुण्याह्ने पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चादग्नेर्दर्भेषु प्राङ्मासीनायाः सर्वान्केशान्संप्रमुच्य प्रसाधयते यं सीमन्तमिति ॥ २ ॥

[गर्भग्रहणादारभ्य तृतीये मासे कस्मिंश्चित्पर्वदिने वा सीमन्तोन्नयनसंज्ञया यौगिक्या प्रसिद्धं संस्कारकर्म कारयते, नतु विद्वानपि स्वयं कुर्यात् । णिचः प्रयोगात् ॥ एष च संस्कारः पात्रस्याधारस्यैव । तेन च गर्भोपकारः । अन्ये तु गर्भस्यैव संस्कारं मन्यन्ते । अपरे तूभयसंस्कारमाहुः ॥ तत्र क्षेत्रसंस्कार एवानुमततमप्रायो वेदार्थविदाम् ॥ अग्नेः पश्चाद्भागे दर्भेषु प्राङ्मुख्या उपविष्टायाः सर्वान् केशान् सम्यक् प्रकर्षेण मुक्तान् कृत्वा कंकतेन बालस्पष्टीकरणेन प्रसाधयते स्पष्टीकरोति यंसीमन्तमिति तिसृभिर्ऋग्भिः ॥ ]

त्रिः श्वेतया (श्येतया) शलल्या शमीशाखया सपलाशया वा सीमन्तं विचिनोति यास्तेराकइति ॥ ३ ॥

(शुक्लया, श्वाविच्छलाका—शललिरुपचारात्, तया त्रिवारं सीमन्तं विचिनोति विभजते-ललाटमध्यादारभ्य कृकाटिकां यावद् द्विधाकरोति केशान्॥)

अथास्याः पृथक्केशपक्षौ सन्नह्यति नीललोहितेन सूत्रेण नीललोहितमित्यनुष्टुभा ॥ ४ ॥

(कङ्कतसमीकृतानां, शलल्या कृतसीमन्तानां, केशानां पत्त्वौ पार्श्वद्वयगतौ बध्नाति ॥ ) यो गुरुस्तमर्हयेत् ॥ ५ ॥

(सीमन्तोन्नयनस्य कर्ता यो ब्राह्मणस्तं मधुपर्कादिना पूजयेत् ॥ )

एतदेव कुमारीणां सटोद्धरणमत्रैवानुलेपनम् ॥ ६ ॥

(वाग्दानात्पूर्वं कुमारीणां सटोद्धरणं-वेणीगूहनं केशरचनाविशेषात्मकं कर्मैतदेव मन्त्रवत्कर्तव्यमन्यत्तूष्णीम् ॥ अत्र ये के च ज्मेत्याज्यप्रधानम् ॥ अत्रैवानुलेपनं सर्वौषधिकुङ्कुमप्रभृतिभिः सीमन्तस्य शोभाविशेषाधायि कर्म कर्तव्यम् ॥ )

इन्द्राणीयागः ॥ २ ॥

कुमारीणां यदा केशा वेणीबन्धनयोग्याः स्युस्तदा सीमन्तोन्नयनविधिना सटोद्धरणं प्राग्वाक्प्रदानात्कर्तव्यम् ॥ इन्द्राणीमासु नारिष्विति तु यद्धक्ष्यति तद्वाचा दत्तायां कन्यायाम् । इन्द्राणीयाग आज्येन वाग्दानदिवसे भवेत् । तत्राज्यं हविः ॥ आज्यभागान्ते चतुर्गृहीतेन प्रधानम् ॥ इन्द्राणीमासु० इति ॥

गोदानसंस्कारः ॥ ३ ॥

गोदानिकैर्मन्त्रैः कन्यामलङ्कृत्य चतुष्पादे भद्रपीठे प्राङासीनायाश्चतस्रोऽविधवा माता पिता च गुरुः सप्तमस्तां सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति ॥ इन्द्राय स्वाहा इन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै पुष्ट्यै विश्वावसवे-गन्धर्वराजाय स्वाहा इति ॥ १ ॥

( संकल्पितैरलंकरणैरलंकृतायाः कन्यायाः सौभाग्यविवृद्धये गोदानिकमन्त्रस्नापनपूर्वमिन्द्राद्या नव देवता स्थालीपाकेनेष्टव्याः ॥ विश्वावसवे गन्धर्वराजायेत्येकैवाहुतिः ॥ अत्र पल्लवचतुष्टयं पवित्रस्य वस्त्रस्य चतस्रोऽविधवाः सव्येन पाणिना अवष्टभ्नन्ति । वामदक्षिणभागयोः मातापितरौ च जलमभिषिञ्चतः , अग्रे गुरुर्मन्त्रपाठं करोति ॥ सर्वगन्ध कुङ्कुमकर्पूरजातीफलादिमिश्रितवारिपूर्णकलशैर्दक्षिणपाणिस्थैर्या आपो दिव्याः इति द्वाभ्यामेनाग्र्यामिति च स्नानम्॥ अत्र गोदानिकैर्मन्त्रैः क्षुरेण कन्यायाः केशवपनं सर्वत्र सर्वैः प्रत्याख्यातम् । अन्यथा समाचारविरोधोऽमङ्गलं च स्यात् ॥ कुतश्च नात्र चूडाकरणमेव तर्हि अतिदिशेत्-इति ॥ )

(अत्र वस्त्राभूषणपात्रादिदानसंकल्पे प्रजाभ्यस्त्वेति रायस्पोषाय त्वेतिच न वाचयितव्यौ यजमानः कन्याच ॥ एतत्प्रयोगन्तु शुल्कदेयाविवाहे दातृप्रति ग्रहीतारौ-वरयजमानौ कुरुतः ॥ तदुक्तं काठकगृह्ये— "अथ शुल्कदेयायाः।१। हिरण्यं व्यतिहरतः (समर्पयतः) ।२। प्रजाभ्यस्त्वेति प्रददाति (वरः) ।३। रायस्पोषायत्वेति प्रतिगृह्णाति (कन्यापिता) ॥ ४ ॥ )

नाडीं तूणवं मृदङ्गं पणवं सर्वाणि च वादित्राणि गन्धोदकेन समुपलिप्य कन्या प्रवादयते शुनंवदेति ॥ २ ॥

( नाडी वंशः, तूणवं गोमुखः वाद्यविशेषः, एतानि वाद्यानि चन्दनकुङ्कु-

मादिकल्केनोपलिप्य गुरौ मन्त्रं शुनंवदद्दुन्दुभ इत्यादि कृतमंगलेत्यन्तं पठति सति कन्यैव पूर्वं वादयते ) ॥ प्रतिसखि प्रक्रीडयत्येकमहर्द्वे वाऽहोरात्रे ॥ ३ ॥ ( ताः सखीर्नर्तयति गापयति क्रीडयति च ) ॥

अलक्ष्मीनिर्णोदनसंस्कारः ॥ ४ ॥

यज्ञियस्य वृक्षस्य प्राक् आयतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति ॥ १ ॥ ( अश्वत्थोदुम्बरवटादियज्ञियवृक्षोद्भवां पूर्वदिक्प्रसृतां एकप्रहाराच्छिन्नामेकस्सरेण लोहितसूत्रतन्तुना प्रच्छाद्य सावित्रेण कन्यायै शाखां प्रयच्छति ॥ ) । २ । ( या तेऽलक्ष्मीरिति गुरुर्गृहीतशाखां कन्यां मन्त्रयते अलक्ष्मीनिर्णोदनमेतच्छाखाप्रदानम् ॥ )
तस्या उत्सर्गः स्थावरोदके शुचौ वा ( देशे ) देवतायतने ॥ ३ ॥
( शाखायास्त्यागः कूपतडागादिषु, पवित्रे वा प्रदेशे, मद्योपहारशोणिताद्यपवित्रीकृते देवगृहे वा । अत्र त्रिकादिभिर्होमः । )

अथातो हविष्यकल्पं व्याख्यास्यामः ॥ ५ ॥

। १ । दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा । २ । ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा द्वावग्नी प्रज्वाल्य द्वौ पशू उपाकरोत्यर्यम्णे दक्षिणं प्राजापत्यमुत्तरम् । ३ । असम्भवेत्वेकपशुः ॥ ४ ॥ तण्डुलैर्वा कुर्यात् । ५ । यथास्थानं पशुर्यथास्थानमवदानानि तथा हविः । ६ । अग्निं सोमं वरुणं मित्रमिन्द्रं बृहस्पतिं स्कन्दं

रुद्रं वात्सीपुत्रं भगं भगनक्षत्राणि कालीं षष्ठीं भद्रकालीं पूषणं त्वष्टारं महिषिकां च गन्धाहुतिभिर्यजेत ॥ ७ ॥ [ १ हविष्यकल्प इति पारिभाषिकी कर्मविशेषसंज्ञा । अतिक्रान्तद्वादशवर्षाणां कन्यानां दोषनिवृत्तयेऽयं संस्कारः ॥ अत्र कर्मणि कुमार्या ब्रह्मचर्यस्खलनं रजस्वलात्वमेव च निमित्तम् । द्वादशवर्षानन्तरं कुमारीणां स्वप्नादौ रेतःसेकसम्भवः । अतो द्वादशवर्षोर्ध्वं कर्मैतदवश्यं कर्तव्यम् ॥ एतद्वयसोऽर्वाङ् न कर्तव्यम् ॥

२ अगत्यापि विवाहे द्वादश वर्षाणि नातिक्रमणीयानि इति तात्पर्यम् ॥

५ पश्वलाभे तण्डुलपिष्टेन वा पश्वाकृतिं कुर्यात् ॥ ६ पिष्टपशावपि मुख्यपशुवत्सर्वं (स्थानमाज्यभागाभ्यां पूर्वं स्थितिः, अवदानानि हृदयाद्यङ्गानि, पशुपुरोडाशस्थाने स्थालीपाकः) इति कर्तव्यम् ॥ ७ सुगन्धिद्रव्याहुतिभिः प्रधानानन्तरं सप्तदश देवता यजेत ]

अथातो हविष्यपुण्याहः ॥ ६ ॥

१। उदक्रान्तं गत्वा यथोपपत्ति वा पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाऽहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राणी वरुणानी गन्धर्वाण्युदकान्यग्निर्जीवपुत्रः प्रजापतिर्महाराजः स्कन्दोऽर्यमा भगः प्रजानक इति २ ॥ [१ हविष्येण व्रीह्यादिना पुण्येऽहनि क्रियमाणतात्र शब्दप्रवृत्तिनिमित्तम् ॥ २—देवतापदेषु चतुर्थ्यां परिणामः।

जीवपुत्रोऽग्निरित्येकैव देवता । एकादश प्रधानाहुतयः । केचिन्महाराजेत्याकारान्तं मूलस्थं मत्वा महाराज्ञे स्वाहेति पठन्ति । उदकसमीपे गत्वा यत्र वा कर्तुमुपपद्यते कर्मैतत्कर्तव्यम् । पयस्येव स्थालीपाकः श्रपयितव्यः नाप्सु ॥]

कन्याया विवाहपूर्वरात्रिकर्तव्ययागः ॥ ७ ॥

यामेव द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यां रात्र्यामतीते निशाकाले नवां स्थालीमाहृत्य पयसि स्थालीपाकं श्रपयित्वा सर्वगन्धैः फलोत्तरैः सशिरस्कां स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोत्यग्नये सोमाय मित्राय वरुणायेन्द्रायेन्द्राण्यै गन्धर्वाय भगाय पूष्णे त्वष्ट्रे बृहस्पतये राज्ञे प्रत्यानीकायेति ॥ ६ ॥

(विवाहदिनस्य पूर्वेद्युररुणोदयवेलायां इत्यर्थः अग्नये स्वाहेत्याद्या द्वादशाहुतीर्जुहुयात् ॥ )

वरस्य विवाहपूर्वरात्रिकर्तव्ययागः ॥ ८ ॥

एता एव देवताः पुंसः कुम्भं वैश्रवणमीशानं च यजेत ॥ २ ॥

[ पुंसोपि (वरस्यापि) तस्यां रात्र्यां संस्कारार्थमतयैवेतिकर्तव्यतया एता एव (पूर्वोक्ता द्वादश) देवता यजेत । कुम्भादयश्च तिस्र इति । एतावानेव च विशेषः । स्त्रियो द्वादशाहुतयः पुंसो (वरस्य) पंचदश ॥ निर्वपणादिष्वप्यत्र पंचदश देवताः ] केचित् वन्ध्यात्वदोषनिवृत्तये संस्कारमेनं कथयन्ति तन्मूलं मृग्यम् ॥

पूर्वेद्युःकर्म गेयनृत्तानुमंत्रणं नाम ॥ ६ ॥

चतस्रोऽष्टौ वा अविधवाः शाकपिण्डीभिः स्त्रियोऽन्नेन च ब्राह्मणान्भोजयित्वा वीणागायिभिः सह संगायेयुरपिवा चतुरो नर्तनं कुर्यात् क्रीडंवः शर्धो-० इति ।१।

[ अन्यूनाश्चतसृभ्योऽविधवाः स्त्रियः समसंख्याः षट्कवर्जाः शाकमिश्राभिः पिण्डीभिरन्यैश्च भोजनविशेषैर्ब्राह्मणान् भोजयित्वा वीणया ये गायन्ति तच्छीलैः सह सम्भूता मंगलाचारं गायेयुः । अपिवा चतुरो-नर्तणप्रवीणो नर्तनं कुर्यात् । यदि शीलादिगुणयुक्तो भवेत् । अन्यथा न ताभिः सह नर्तनं कुर्यात् इत्यनेनाभिप्रायेणाऽपिवाशब्दः ॥ अथवा— 'अपिवा, इति समुच्चये सकलोऽसौ स्त्रीगणश्चतुरः सोत्साहो भूत्वा नर्तनाद्युत्सवं कुर्यात् इति॥ अत्राटातिललवणदध्यादिसंस्कृताः शाकपिण्डयः ॥ ]

अक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत ॥ अग्निना रयि० । प्रजापते नहि० इतिच ॥ २ ॥ [ अक्षतानामनवहतानां यवानां सक्तुभिरग्निं पुष्टिपतिं प्रजापतिं च स्वमंत्राभ्यां यजेत ॥ ] सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत ॥ ३ ॥ [ पूर्वेद्युरेव विवाहाह्नः इदमपि कर्म । यत्र गेयं नृत्तं चानुमन्त्रयति क्रीडं वइत्यनया ऋत्विक् । अतो गेयनृत्तानुमत्रणं नाम पूर्वेद्युः कर्मेदम् ॥ अत्र ऋत्विजः— इदंकर्म, प्रास्थानिकं द्वितीयमपि कर्म, प्रधानद्वयस्यैकरूपत्वात्सहैव (युगपदेव) आचरन्ति ।

तन्मूलं मृग्यम् ॥ मम तु पृथक्तन्त्रत्वमेव समीचीनं भाति ]

अथ प्रास्थानिकम् ॥ १० ॥

[ इदं प्रास्थानिकं कर्म वरस्य विवाहार्थं श्वशुरगृहागमनसमये कर्तव्यम् । ] तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चाद् भगिनी सिचं गृह्णाति शस्त्रं गृहीत्वा ॥ २ ॥ [ अत्राप्यक्षतसक्तव एव हविः । आज्यभागान्ते व्रजतो महाराजस्य भगिनी पश्चाद्वस्त्रान्तमादत्ते छुरिकादिकं शस्त्रमादाय ॥ जन्यैः सह पूषामेति गृहान्निष्क्रम्य स्वसा सिचान्तहस्तैव सह जलसमीपं गच्छति ] ॥ पूषा मेति यान्ति यत्रोदकम् ॥ ३ ॥

पूषामेत्यादिमंत्रेणोदकसंमुखा गच्छन्ति जन्याः वरश्च

शन्नोदेवीरित्युपस्पृश्य प्राचीदिगिति यान्ति यथादिशम् ॥ ४ ॥ [ तत्र शं नो देवीरित्युदकमुपस्पृश्य शिरसि प्रक्षिप्याचम्य च प्राची दिगिति यान्ति यथादिशम् । उदकान्तात्कल्याणं वदन्ती स्वसा प्रत्येति । ततो होमकर्ताग्निं पुष्टिपतिं प्रजापतिं च सक्तुभिरिष्ट्वा ऋतुतिथ्यादि समापयेत् ॥ ]



## (१५) पंचदशी काण्डिका–अथ ब्राह्मदेयायाः प्रदानविधिं वक्ष्यामः० १–इत्यादिका ॥



अथशब्दो मङ्गलार्थः । ब्राह्मो दैवः आर्षः प्राजापत्यः आसुरः गान्धर्वः राक्षसः पैशाच इत्यष्टौ विवाहा मन्वादिस्मृतिषु कृतलक्षणाः सन्ति । तेषु च ब्राह्मो विवाहः 'आच्छाद्य चार्चयित्वा च श्रुतिशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्तितः, इति मनुना लक्षितो मुख्यतामावहति । अनेनैव ब्राह्मेण विवाहेन दीयते या सा ब्राह्मदेया । तस्याः प्रकृष्टे दाने विधिमितिकर्तव्यतां वक्ष्यामः इति ॥ शुद्धपक्षस्येत्यादि० २ ॥ शुद्धपक्षस्य प्रशस्ते दिवसे, पौर्णमास्यादिरूपे पर्वणि वा, उत्तरदिगग्रेषु दर्भेषूपविष्टयोः सुहृद्बन्धुभृत्यैः सह दातृप्रतिग्रहीत्रोर्मध्यादेकः प्रतिग्रहीता पूर्वाभिमुखः,अन्यश्च प्रदाता पश्चिमाभिमुख इति ॥ मध्ये प्रागग्रेति० ३ ॥ ऋत्विक् यथाचारं मण्डलं कृत्वा स्वस्त्ययनं च विधाय तत्र पूर्वाग्रान्दर्भान्प्रथममास्तृणाति तेषूपरि उत्तराग्रान्, तत्रोदकपूर्णं कंसं परिवर्तुलं मङ्गल्यपात्रं व्रीहियवगर्भं सन्निधाय दक्षिणत उदङ्मुख उपविष्टः उपयमनं दातृग्रहीतृसम्बन्धं तयोर्मध्ये कुर्यात् ॥ उप्य–ओप्य–वोप्येतिपाठान्तराणि ॥ समेतेष्वाहेत्यादि० ४

समेतेषु सङ्गतेषु ज्ञातिष्वाह । किम् । कन्यां ददात्वस्मै भवान् इति त्रिर्दातारं चोदयेत् कन्यां प्रतिगृह्णात्वस्माद्भवानिति च त्रिर्वरम् । ततः ददानि ते, इति त्रीन् वारानुच्चैर्भाषयते दातारम् । उदकपूर्वं दत्तायां कन्यायां प्रणवोच्चारणपूर्वं ॐभगवन्कन्यां प्रतिगृह्णामीति त्रिर्वरमुच्चैर्भाषयते । त्रिसत्या हि देवा इति श्रुतिः, त्रिरभिहितं न व्यभिचारि ॥ नात्र सावित्रः प्रतिग्रहमंत्रः॥

एतद्वः सत्यमित्यादि० ५ ॥ एतद्दानप्रतिग्रहकर्म युष्माकमव्यभिचारितमस्त्विति दातृवरपत्नौ पश्यन्नाह । एतन्नः सत्यमिति तौ प्रतिवदतः। इति त्रिवारम् । ततो वरस्योत्तरत उपविष्टायां वध्वां समाना वः इति ऋत्विग्वधूवरौ उभौ वीक्षमाणो जपति केचित्तु उभौ दातृप्रतिग्रहीतारौ–इति वदन्ति ॥ चतुर्विंशी कण्डिका ॥ षडर्घ्यार्हा भवन्ति इत्यादि० ॥ विवाहात्पूर्वमेव पाद्यार्घ्यमधुपर्कैर्विवाह्यः श्वशुरेण, आचार्यउपनेताऽध्यापयिता शिष्यस्य, ऋत्विग्याज्यस्य, राजा जनपदस्य, गुणोत्कर्षेण प्रियो यो यस्य स तस्य, सद्यः स्नातकस्त्वाचार्यस्यार्घ्य–पूजामर्हन्तीत्यर्घ्यार्हाः षट् भवन्ति इति॥ तुल्यं पूजाविधानं षण्णामपीति षण्णामेवात्रोद्देशः ॥ अथैनमर्हयन्ति । २ ।

अथ– वक्ष्यमाणप्रकारेण । एनं–एतेषामन्यतमं । अर्हयन्ति–पूजयन्ति संमानयन्ति ॥ आदौ च कर्मणः ३ ॥ विवाहात्पूर्वमेवार्घ्यादिदानम् । विवाह्य इत्यर्हे आवश्यके वा कृत्यप्रत्ययः । विवहनमर्हतीति, विवहति वा-

वश्यं कन्यामिति विवाह्यः । नच विवाहादूर्ध्वं विवाहार्हो भवतीति पूर्वमेव विवाहात् इदं कर्तव्यं नतु विवाहादूर्ध्वम् ॥ अर्घ्यमुदकं सौषधं दर्भा इति ।४।

उदकं व्रीहियवयोश्चान्यतरत् दर्भा इति एतत्त्रयमर्घ्यशब्देनोच्यते ॥ आ० सौषधं-सतण्डुलाक्षत वदरादि ॥ कंसे चमसे वा० इत्यादि ॥५॥ कांस्यपात्रे चमसे वा दारुपात्रविशेषे दधि मधु चासिच्य मधुपर्क उच्यते । तच्च पात्रं वर्षीयसा बृहता पात्रेण पिधायाधस्तादुपरिष्टाच्च विष्टराभ्यां गृहीत्वा पाद्यं प्रथमं येषां तैः पाद्यार्घ्यमधुपर्कैः प्रतिपद्यन्ते उपक्रमन्ते पूजयितारः॥

मयिदोहोऽसीति० ॥ ६ ॥ पाद्यमर्घ्यं मधुपर्कं चानीयमानं मयि दोहोऽसीत्यादिमंत्रेण विवाह्योऽनुमंत्रयते । अमंत्रज्ञश्चेद्विवाह्यस्तदा ऋत्विगेवैनं पाठयति ॥ विष्टरोऽसि मातरि सीद ॥ ७ ॥ इति मंत्रेणासनान्तरस्योपरि भगवन्निदमासनमास्यतामित्युक्त्वा दत्तं दर्भविष्टरमास्तीर्य विवाह्यस्तस्मिन्नुपविशति तूष्णीम् ॥ विष्टर आसीनायैकैकं त्रिः प्राह ॥ ८ ॥ विष्टरे आसीने विवाह्ये सति कन्याप्रदातैकैकं त्रिवारमाह । पाद्यं ३ अर्घ्यं ३ मधुपर्कः ३ आचमनीयं ३ ॥ नैव भो इत्याह न मार्षेति ॥ ९ ॥ भगवन्निति पूज्यसम्मानवचनमाभिमुख्यापादनायात्र ब्रूयात् । नैव भो इति न मार्षेति च ॥ शन्नोदेवीरित्यपोऽभिमंत्र्येत्यादि ॥ १० ॥ शन्नो० इत्यपोऽभिमंत्र्य भगवन्पाद्यं ३ इति पाद्ये निवेदिते पाद्यपात्रं दक्षिणेन पाणिनादाय

सव्ये पाणौ निधाय पाद्याभिः—पाद शोधनसमर्थाभिस्ताभिर्यथालिङ्गं वर एव स्वयं पादाववनेनिज्यात् ॥ आपोहिष्ठीयाभिरित्यादि० ॥ ११ ॥

भगवन्नर्घ्यं ३ इति उक्ते पाद्यपात्रवदर्घ्यपात्रमादायापोहिष्ठेति तिसृभिः शिरसि कुशपवित्रेणापः क्षिपेत् ॥ भगवन्मधुपर्को ३ इति त्रिराह दाता । देवस्य त्वेति मंत्रेण अञ्जलिना प्रतिगृह्य सव्ये पाणौ निदधाति । विष्टरोऽसीत्युपरितनं विष्टरमाकृष्यापास्य, उरुत्वेति उद्घाट्य तच्चक्षुरित्यवलोक्य, पृथिव्यास्त्वा नाभौ सादयामीत्यधस्तने विष्टरे स्थापयित्वा दधिमधुनी प्रदेशिन्याङ्गुल्या मधुवात इति तिसृभिः प्रदक्षिणावृत्तं मिश्रयति ॥ प्रदिशति तर्जयतीति प्रदेशिनी तर्जनी ॥ वसवस्त्वेत्यादि० ॥ १२ ॥ प्राच्या आरभ्य प्रदक्षिणं कृत्वा भक्षयन्त्वन्तैर्मंत्रैर्मधुपर्कपात्रप्रान्तेष्वङ्गुलिलेपान्निर्मार्ष्टि । प्रतिदिशं प्रतिमंत्रमिति वचनात्पञ्चमेन मंत्रेणार्थात्पूर्वोक्तादिक्कोणे निर्मार्जनमापतति ॥ यन्मधुनो०—इत्यादि ॥ १३ ॥ यन्मधुनो० इति मंत्रेण मधुपर्कभागान् अङ्गुष्ठसहितयैकैकया कनिष्ठाद्यङ्गुल्या क्रमेण गृहीत्वा चतुरो वारानश्नाति ॥ आचामत्यमृतोपस्तरणमसीति ॥ १४ ॥ भगवन्नाचमनीयमित्येवं त्रिरुक्तेऽमृतोपस्तरणमसीत्यप आचामति ॥ तस्मा असिपाणिर्गां प्राह० ॥ १५ ॥

अर्हयिता खड्गपाणिर्भूत्वा तस्मा अर्हणीयाय गां प्रह—गां प्रकरिष्य इत्यनुज्ञां प्रार्थयते ॥ इत्याद्युक्तं युगान्तरीणं धर्मम् ॥

एष आद्य उपायः ॥ १८ ॥ एष प्रथमः कल्पः कलौ तु निषिद्धः ॥ यद्युत्सृजेन्माता० इत्यादि ॥ १९ ॥ निश्चितेऽपि यदिशब्दो दृष्टः । यदि वेदाः प्रमाणमिति यथा । उक्तामितिकर्तव्यतां विधाय गामुत्सृजेत् एव न हन्यादित्यर्थः ॥ ओमुत्सृजतेत्यादि० । ओमित्यविचारितसिद्धं कृत्वा हे विशसितारः यूयं गां उत्सृजत । तामुत्सृष्टां दृष्ट्वा पशुं छागं पश्वङ्गं वा मांसखण्डं प्रतिनिदधीत ॥ हशब्द इतिहासे आगमसूचनार्थो वायम् । मांसविहीनो मधुपर्कः न स्यादिति ह श्रुतितो विज्ञायते । अपि वा घृतौदन एव स्यात् ॥ २१ ॥ अपिवा घृतमिश्रितौदन एव कर्तव्यो मांसद्वेषिणे तादृशा वा ॥ पंचविंशी काण्डिका अनृक्षरा-इत्यादिमंत्रेणोदकस्याहर्तारं कन्यास्नानाद्युपयोगि जलमानेतुं सकुम्भं पुरुषं प्रेषयति ॥ १ ॥ शमीशाखयेति० ॥२॥

स प्रहित उदाहार उदकुम्भं सपत्रया शमीशाखया पिधाय स्थगयित्वोदकमानयेत् एतासामेवापामित्यादि- ॥ ३ ॥ एतासामेवाहारितानामपां भागान् अवदाय २ उदकसम्पाद्यानर्थान् कन्यास्नानसुवर्णक्षारणाग्निपर्युक्षणादीन्कुर्यान्नान्येन जलेन ॥ शन्न आप इत्यादिमंत्रेण या इमा इत्यन्तेन [अकेवलाभिरद्भिः स्नातां] सर्वौषध्यादिगन्धद्रव्ययुक्तैर्जलैः स्नापितां. या अकृन्तन्नित्यादिनाऽत्यन्ताभिनवं वासः परिधाप्य आशासाना-इत्यन्तरतो-अन्तरे गुप्तां कृत्वा, यथा न दृश्यते तथा वा सन्नहनं कन्यायाः कुर्यात् । मौञ्जेन

दर्भनिर्मितेन वा योक्त्रेण ॥ स्वयमेव कन्या वासोऽन्तरतो मौञ्जेन दार्भेण वा योक्त्रेण सन्नह्यति-बध्नाति इत्यन्ये ॥ योक्त्रं त्रिगुणं दाम ॥ ४ ॥

प्रेतो मुञ्चामि-इत्यादिभिस्तिसृभिरुदानीय-स्नानस्थानादुत्क्षिप्य ऋत्विक् पिता ज्येष्ठो भ्राता वा आनयति ॥ ५ ॥ उक्तं वाससः कर्म ॥ ६ ॥

या अकृन्तन् इत्येतयैवोत्तरीयं च वासः परिधापयति ॥ तत्तु उक्तमेव ॥ आचारिकाणि० ॥ ७ ॥ अस्मिन्नवसरे देशजातिकुलोचितानामाचारादागतानां मङ्गल्यानां कर्मणां कालः ॥ यथा कश्मीरेषु श्वश्रूरन्या वाविधवा वधूवरयोः शिरसि मङ्गल्यमालामाबध्नाति पूजापूर्वकम् ॥

तूष्णीं निर्मन्थ्यमित्यादि० ॥ ८ ॥ सद्योऽरणिभ्यां निर्मथितो य स्तत्र निर्मन्थ्यशब्दो रूढः ॥ तूष्णीमित्यमंत्रकमित्यर्थः । भ्राष्ट्राद् द्वितीयः ॥ अश्मानमग्निना संताप्य सूर्यसंमुखं सूर्यकान्तमणिं वा स्थापयित्वा कर्पासगोमयचूर्णादिसंसर्गं कृत्वोत्पाद्यते यस्तं सान्तपनम् ॥ यत्र दीप्यमानं वा-सूतकाग्नि शवाग्नि संकराग्निपतिताग्निवर्जम् । तथाच-चण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् । पतिताग्निः शवाग्निश्च ते [नष्ट] नेष्टा ग्रहणोचिताः ॥ उपसमाधायेति प्रत्येकं सम्बन्धनीयम् ॥ सोदकेन पाणिना चतुर्दिशं समन्तात्समुह्य पर्युक्ष्य परिषिच्य समन्तात्परिस्तीर्याज्यस्य विलयनं विगलनं, उत्पवनं पवित्रेण पवनं कृत्वाघारादाज्यभागान्तं हुत्वाऽग्नेः पश्चात् शकटं रथं वाव-

स्थाप्य तस्मिन्वधूवरौ प्राङ्मुखौ योगेयोगे इति मंत्रावृत्त्या युनक्ति दक्षिणेन वरं तस्योत्तरतो वधूम् ॥ तूष्णीं विमुच्य खेरथस्येत्यादि० ॥ ६ ॥
ततो योजितं योक्त्रं तूष्णीं-अमंत्रकमेव मोचयित्वा खेरथस्येत्यादि-कयर्चा हिरण्यमङ्गुलीयकादि निष्टक्यं सुखविमोचनं यथा भवति तथा दर्भप-विश्रेण बद्ध्वा युगस्य दक्षिणस्मिन् तर्मणि-दक्षिणभागगते रन्ध्रे निदधाति । दक्षिणभागे च वरस्थाने कन्यामानीय ससुवर्णे दक्षिणभागे युगतर्मणि पूर्वो-क्ताभिरद्भिरध्यधि क्षारयति । शन्ते हिरण्यमिति० । युगच्छिद्रस्याधः कन्यां स्थापयित्वा मूर्धनि सुवर्णोदकं क्षारयतीत्यर्थः ॥ अत्र कन्यायाः संस्कार्यत्वे प्रधानत्वात् दक्षिणतोऽवस्थितिः ॥
अपालानाम्न्या अत्रिसुताया इव त्वग्दोषशान्तये इदं कर्म ॥ दक्षिणतः पुमान्भवति ॥ १० ॥ वरस्य पुनरपि स्वस्थाने प्रत्यावृत्तिः । कन्या चो-त्तरत उपविशति ॥ आयुषःप्राणमित्येकादश सन्तनीः । आकूतमिति ज-यान् द्वादशगृहीतेन, चतुर्गृहीतेनाभ्यातान् जुहोति ॥
तानि यथोक्तम् ॥ १४ ॥
तानि जयादीनि कर्माणि उक्तानतिक्रमेण कर्तव्यानि ॥ अग्नआ-यूंषीत्यग्निपावमानीभिश्च तिसृभिः । १९ । हुत्वा हुत्वा कन्याया मूर्धनि सं-पातानवनयेद्या ते पतिघ्नीति ॥ २० ॥ तासामग्नआयूंषीत्यग्नौ हुत्वा या ते

पतिघ्नीत्यवनयनं मूर्धनि ॥ द्वितीयं अग्निर्ऋषिरित्यग्नौ हुत्वा यातेऽपुत्रियेत्यवनयनं मूर्ध्नि । तथा तृतीयमग्ने पवस्वेत्यग्नौ हुत्वा या तेऽपशव्येति मूर्ध्नि सम्पातावनयनम् ॥ उदगग्नेर्दर्भेषु०- इत्यादि ॥ २१ ॥ अग्नेरुदीच्यां दिशि दर्भानास्तीर्य तेषु प्राङ्मुखीं वधूमवस्थाप्य तस्या वरः प्रत्यङ्मुखस्तिष्ठन्नेव शुचिः शुद्धसंकल्पः सन् दक्षिणं पाणिं अङ्गुष्ठसहितमुत्तानं नीचा दक्षिणेन पाणिना नीचा न्यग्भूतनेत्यावृत्त्या अरिक्तं साभरणं अतिदौर्गत्ये पुष्पफलादिसहितं वा । अरिक्तेनेत्यपि तद्वत् । एवं सव्यं सव्येन देवस्यत्वेति सावित्रेण गृह्णाति ॥ यदि पृथक्तन्त्रमित्यादि० ॥ २४ ॥ यदि उद्वाहविवाहयोः पृथक् तन्त्रं तदा सरस्वतीवाचनानन्तरं, वधूवरौ प्रदक्षिणमग्निमानीय, यत्र पाणिग्रहणं कृतं तत्रैवोपवेश्य, ऋतुतिथियागादितन्त्रं समापयेत् । पुनश्च परिसमूहनादिनोपक्रम्य लाजान्संकल्पयेदिदमर्यम्ण इत्यादिना चतुरञ्जलिमात्रान् ॥

पश्चादग्नेर्दर्भेषु सात्वमसीति वाचयति ॥ २७ ॥ तत उत्तरेणाग्निं वधूवरावानीय पश्चादग्नेर्दर्भेषूपवेश्य सात्वमसीति वरं वाचयति ॥ अग्निमभिदक्षिणमानीयैह्यश्मानमिति वरं दक्षिणेन पदाश्मानमास्थापयति । आतिष्ठेममिति वधूम् ॥ २८ ॥ गुरुः प्रयोजकः । वधूवरावश्मानमाक्रमतः । वधूरपि दक्षिणेनैव पदा ॥ आज्यस्याञ्जलावुपस्तीर्य० इत्यादि ॥ २९ ॥ तानविच्छिन्दती जुहोत्यर्यमणमिति ॥ ३० ॥ आज्येन वध्वा अञ्जलावुपस्तृणाति च-

तुरवदानेन ऋत्विक् । तत इदं हविरित्यादिमंत्रेण शूर्पस्थान् शमीपर्णमिश्रां-ल्लाजानभिमृशति वरः । अनन्तरमस्या वध्वा अञ्जलौ भ्राता लाजानावपति ॥ तानृत्विगभिघारितान्वधूरविच्छेदं कुर्वती एकेनैव प्रक्षेपेणार्यमणमित्यादिना जुहोति । अमुष्येति षष्ठ्यन्तं भर्तृनाम लक्ष्यते ॥ अग्निर्मां जनिमानिति वाचयति ॥ ३१ ॥ वरम् । गुरुरित्यर्थात् ॥ इयं नारीति सर्वत्रानुषजति॥३२॥

हुतेषु तेष्वग्निर्मेति-इयंनारीति च वरं वाचयति ॥ एवं द्विरुत्तरम्॥३३॥

एवमुत्तरं कर्म द्वौ वारौ कर्तव्यम् ॥ तदेवाह— ॥ पर्ययणे पर्ययणे इत्यादि ॥ ३४ ॥ परितोऽयनमग्नेः । प्रदक्षिणमित्यर्थः । ततोऽश्मास्थापनम् । परिस्तीर्य लाजानामावपनम् ॥ ३५—गन्धर्वमिति वदन्ती वधूर्लाजान् जुहोति ॥ ३६—सोमो मेत्यादि-इयं नारीति च वरं वाचयति ॥ ३७—त्र्यम्बकमित्यादिस्तृतीयो होमः ॥ ३८—पूषामेति इयं नारीति च वरं वाचयति । (वरं वाचयतीति सर्वत्र वाचनमेव नत्वनेन होमः) (लाजाशब्दः सूत्रकृतोभयलिङ्गो दृष्टः) शिष्टान् स्विष्टकृते जुहोति शूर्पेण कर्ता ॥ ३९ ॥ अन्यथा हि प्रधानहोमः कृतोऽञ्जलिना च । तन्निवृत्तये शूर्पग्रहणं कर्तृग्रहणं च ॥ वरो दक्षिणां [णा] ॥ ४० ॥ वर एव दक्षिणां लाजाहोमकर्त्रे भ्रात्रे दद्यात् । अथवा वरोऽत्र गौः । वरं गां तु विजानीयाच्चतुर्वर्षामिति श्रुतिः ॥ गौर्दक्षिणात्वेन देयेत्यर्थः ॥ तूष्णीं हस्तौ

विमुच्य वि ते मुञ्चामीति सन्नहनम् ॥ ४१ ॥ सन्नहनं योक्त्रं विमुंचति कर्ता मंत्रलिङ्गात् नतु स्वयम् ॥ उत्तरतोऽग्नेर्दर्भेषु प्रक्रामयति इत्यादि ॥ ४२ ॥ अग्नेरुत्तरेणास्तीर्णेषु दर्भेषु प्राङ्मुखीं वधूं प्रक्रामयति कर्ता सप्त पदानि सप्तभिर्मन्त्रैः । सखा सप्तपदा भवेत्यादि विष्णुस्त्वान्वेतिवित्यन्तं सर्वत्रानुषङ्गः ॥ केषांचिन्मते विष्णुस्त्वान्वेतु इति एतावन्मात्रस्यैवानुषङ्गः ॥ तच्चक्षुरित्यादित्यमुपस्थापयति ४३ वधूमितिशेषः अस्तमितेऽग्निम् ॥ ४४ ॥ अस्तंगते रवौ सति रात्रिविवाहे इत्यर्थः । तच्चक्षुरित्यनयाग्निमेवोपस्थापयेत् ॥ जीवन्तीं ध्रुवं स्वस्त्यात्रेयं दर्शयत्यरुन्धतीं च । एतेषामेकैकं पश्यसीत्याह पश्यामीति प्रत्याह ॥ ४५ ॥ ततो जीवन्त्यादीन्दर्शयति गुरुः । जीवन्तीं पश्यसि । पश्यामीति सर्वत्र वधूः प्रत्याह । एवं ध्रुवं स्वस्त्यात्रेयं अरुन्धतीं । जीवन्तीमिति वध्वा विशेषणमित्यन्ये । जीवन्तीं कन्यामिच्छन्नित्यर्थः ॥ दिवापि स्मरणरूपं दर्शनं–ज्ञानं सम्भवति दर्शनस्यात्र सामान्यमात्रे विवक्षितत्वात् । तस्माद्दिवापि ॥ सुमंगलीत्यादिना वीक्षितानुमंत्रयते ॥ ४६ ॥ वीक्षितान् ध्रुवादीन् । गुरुः ॥ उदुत्तममिति प्रागुदीचीमावसथं यतीमनुमन्त्रयते यतो वा स्यात् ॥ ४७ ॥ उदुत्तममिति चतसृभिरैशानीं दिशं अभिमुखीकृत्य गृहं यतीं–गच्छन्तीमनुमन्त्रयते यत्र वा ऽऽवसथः स्यात्तस्मिन्पितृवेश्मनि तदभिमुखी गच्छेत् ॥

उलपराजीं स्तृणात्याशयनीयात् (अष्टाविंशी काण्डिका) ॥ १ ॥ उल-
पो वीरणः तृणविशेषः तस्य पंक्तिं अवतरणस्थानादारभ्य वधूशयनगृहवि-
शेषं यावत् स्तृणाति रचयति ऋत्विक् ॥ तया प्रविशति ॥ १ ॥ रथादि-
कादवतीर्य वधूसहितो वरस्तया राज्या प्रविशति गृहम् ॥ अध्याहिता-
ग्निं सोदकं सौषधमावसथं प्रतिपद्यते ॥ ३ ॥ स्थापितविवाहाग्निं, उ-
दकुम्भभूषितं, व्रीह्याद्योषधिसनाथमेतादृशं गृहविशेषं प्रविशति । यो ऽसौ
वैवाहनोऽग्निः स तत्र पूर्वमेवाहितो भवति ॥ रोहिण्या मूलेन वेत्या-
दि ॥ ४ ॥ रोहिण्या मूलेन वा नक्षत्रेण युक्ते चन्द्रमसि । यद्वा ज्यो-
तिःशास्त्रोक्ते पवित्रे दिने । आवसथ्याग्निमपरेण । अनडुह इदमानडुहं । तत्र
रोहिते चर्मण्युपविश्य वध्वा सह वरः केवलेष्वेव वा दर्भेषु, स्वयमिमं हो-
ममारभते अग्निरैतु-इत्यादिना ॥ आज्यस्यैकदेशे दध्यासिच्येत्यादि ॥५॥
पृथक्पात्रोद्धृते घृतैकदेशे दध्यासिच्य त्रिवारं दधि भक्षयित्वा वधू-
मिति देवपालः । आत्मना त्रिर्दधि प्राश्येति अन्ये ॥ माणवकाय वध्वा उत्सङ्गे स्थि-
ताय वरो इडामग्न इति फलानि प्रददाति । [काश्मीरिकाचार एवं प्रकार-
कः—ऋत्विग्वराय । वरो वध्वा वस्त्राञ्चले । सा च श्वशुरवस्त्राञ्चलेऽर्पयति
फलानि] ॥ एकोनत्रिंशी काण्डिका-तूष्णीमुपचरितं स्थालीपाकं श्रप-
यित्वा तस्याग्निमिष्ट्वा प्रजापतिं च शेषं प्राश्नीतः ॥ १ ॥

तूष्णीममन्त्रकमेव यत्रोपचारो निर्वापादिस्तं चरुं श्रपयित्वा श्रृतमभिघार्योद्वासयोद्गुद्वास्य च तस्यांशेनाग्निं प्रजापतिंचेष्ट्वा हस्तेनाहुतिद्वयं हुत्वा मेक्षणेन वा अवशेषमन्नमेवेति चतसृभिरभिमंत्र्य सौवर्णं राजतं पात्रं शालिचूर्णमण्डले प्रतिष्ठाप्य तस्मिन्दधिमिश्रितं प्राश्नीतः । मन्त्रो वरस्यैव न वध्वाः । मम चामुष्याश्च भूयादित्यत्र वध्वाः षष्ठ्यन्तं नाम ग्राह्यम् ॥ इति समशनम् ॥ भुक्त्वोच्छिष्टं वध्वै दद्यादिति गोभिलः ॥ संवत्सरं ब्रह्मचर्यमित्यादि-१ ॥ विकल्पो वयोविशेषौत्सुक्यापेक्षया ॥ अतः (तौ) संविशतः २ ॥ सहशयितौ भवतः ॥ स्त्र्यादिव्यत्यासं जपतः ॥ ३ ॥ व्यत्यासो विपर्ययः । स्त्री आदिर्यत्र व्यत्यासे स स्त्र्यादिव्यत्यासः ॥ एवमेवतौ प्रजाकामौ संविशतः ॥ ४ ॥ ऋतौ प्रजाकालेऽप्यनेनैव विधिना ॥ करदिति०५ ॥ करदिति यजुषा भसदं स्त्रीचिह्नं वरोऽभिमृशति ॥ भसदिति०६ ॥ तदुपरि निहितं जननं शेपं भसदिति यजुषाभिमृशति ॥ बृहदिति०७ ॥ बृहदितिअनेन जातं रेतः सिञ्चतीत्यर्थः

॥ इति गर्भाधानम् ॥

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥ हृदयहर्षकरैर्मधुरस्वरैः प्रियजनान्मदयन्मुरलीरवैः । दुरितदुःखहरः करुणाकरो दिशतु मेऽभिमतं परमेश्वरः ॥

---

# विवाहविषये












ॐ

ओंनमोनारायणाय ॥ श्रीगणेशाय नमः ॥

श्रीवाग्देव्यै सरस्वत्यै नमः ॥



# अथ विवाहपद्धतिः ॥

आदौ कलशमुल्लिख्य स्वस्तिभद्रपाठादि० वषट्ते० इति तावत् ॥ कलशे प्रधानानि ॥ अग्निना रयिमश्नवत्पोषमेव दिवे दिवे । यशसं वीरवत्तमम् नमः ॥ प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां नमः ॥ अर्यम्णे नमः, गन्धर्वाय नमः, त्र्यम्बकाय नमः, विवाहोद्वाहदेवताभ्यो नमः ॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्स्थे । ते अस्मभ्यमिषये वि-

श्वमायुः च्प उस्रा वरिवस्यन्तु देवाः नमः ॥ अग्नये नमः, वायवे नमः, सूर्याय नमः, चन्द्रमसे नमः, विष्णवे नमः प्रायश्चित्त देवताभ्यो नमः ॥ तद्विष्णोः० वासुदेवाय नमः ८ ॥ एवं योरुद्रो० इत्यादि-पंचायतन देवताभ्यो नमः ॥ इन्द्रापर्वता० ॥ इत्यादि सर्वं कलशपूजनम् ॥ ऐन्द्राग्नं० ॥ मधुपर्कः ॥

सावित्राणि सावित्रस्येत्यादि महागणपतये इत्यादि० अग्नये पुष्टिपतये प्रजापतये अर्यम्णे गन्धर्वाय त्र्यम्बकाय विवाहोद्वाहदेवताभ्यः । अग्नये वायवे सूर्याय चन्द्रमसे विष्णवे प्रायश्चित्तदेवताभ्यः । मेषादिभ्यो द्वादशलग्नेभ्यः । अश्विन्यादिभ्यः सप्तविंशतिनक्षत्रेभ्यो वासुदेवादिभ्योः विष्णुपञ्चायतनदेवताभ्य अभयङ्कर्यै इत्यादि० इन्द्राय वज्रहस्तायेत्यादि सर्वं हेरुकादिभ्यः० मधुपर्कं ओंनमो नैवेद्यं निवेदयामि नमः ॥ हिरण्यगर्भः ८ ॥

द्वारपूजनं ॥ शुक्लाम्बरधरं० ॥ तीर्थेस्नेयं ॥ वस्त्रोपवित्र० ॥ वर यजमान कन्या तिलकं ॥ यदाबध्नं ॥ परमात्मने०॥

स्वप्रकाशो० ॥ वनस्पतिरसो० ॥ नमोधर्म० ॥ यत्रास्तिमाता०॥ अद्यतावत्० महागणपतये० द्वारदेवताभ्यां, धर्माय, अधर्माय, देहल्यै, खिंखिन्यै, मेरुप्राकारदेवताभ्यः, धूपदीपसंकल्पात्सिद्धिरस्तु धूपो नमः दीपो नमः ॥ संवः सृजामि० ॥ अश्विनोरिति द्वारस्य जीवाधानम् ॥ गायत्र्यै नमः ओंभूर्भुवःस्वः ३ । अद्यतावत्० महागणपतेः० द्वारदेवतानां ॥ धर्मस्य अधर्मस्य देहल्याः खिंखिन्याः मेरुप्राकारदेवतानां आत्मोद्वाहनिमित्तं (इतिवरः) कन्योद्वाहनिमित्तं (इतियजमानः) द्वारपूजनमहं करिष्ये ओंकुरुष्व ॥ एवमासनादि० ॥ आवाहनकाले स्वागतं भोः इति (कन्यापिता वरपितरं कथयेत् । सच वरपिता सुस्वागतमिति–उत्तरयेत् ॥ अत्रैव काले रूप्यकसहितजातीफलस्यान्योन्यमर्पणम् ॥) एवं पाद्य–अर्घ्य–गन्धाऽर्घ पुष्पार्पणम् ॥ (महागणपतये इत्यादि नामभिर्द्वारदेशे । धर्मायाधर्मायेति दक्षिणवामप्रदेशे द्वारस्य । देहल्यै इत्यधः । खिंखिन्यै मेरुप्रा० इत्युपरि ॥) इत्यादि

दक्षिणान्तं ॥ अथात्रैव पूर्ववत्–अच्छिद्रं ॥ ऋत्विक् च यज्ञभूमिं गच्छन् कनिक्रददितिसूक्तं पठेत् ॥

अथ रक्षोघ्नमंत्राः ॥ ओंआरुणेर्वेगवतः प्राचीदिगिति सूर्यस्याध्वानमीप्सिता आरुणे स्थानान्तरे ॥ अच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि निम्नदोऽसीदमहन्तन्निमृणामि योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मो, विभूरस्यभ्यहन्तम्भूयासं योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः, प्रभूरसि प्राहन्तमाति भूयासं योऽस्मान्द्वेष्टि यं च वयं द्विष्मः, पूषा मा प्रपथे पातु पूषा मा पशुपाः पातु पूषा माधिपतिः पातु, प्राची दिगग्निर्देवता ऽग्निं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्या दिशोऽभिदासति, प्रतीची दिक् सोमो देवता सोमं स ऋच्छतु यो मैतस्या दिशोऽभिदासत्युदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मैतस्या दिशोऽभिदासत्यूर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मैतस्या दिशोऽ-

भिदासतीयन्दिगऽदितिर्देवतादितिं स ऋच्छतु यो मैतस्या दि-
शोऽभिदासति, ज्योतिषे तन्तव आशिषमाशास्तेऽ सा अनु मा
तनु, ॥ इष्टिर्वा ब्राह्मणानि प्रजापतिरग्नावैष्णवी ॥ अग्नये
पथिकृतेऽष्टाकपालन्निर्वपेद्यस्य पौर्णमासी वामावस्या वातिपद्येत
बर्हिष्पथं वा एष एति यस्य पौर्णमासी वामावस्या वातिपद्यते
ऽग्निर्देवानाम्पाथिकृत्तमेवान्वारभते स एनम्पन्थामपि नयति वि
वा एतद्यज्ञं छिनत्ति यद्यज्ञे प्रतत एतामन्तरेष्टिन्निर्वपते ॥ य ए-
वासा आग्नेयोऽष्टाकपालः पूर्णमासे योऽमावस्यायान्तमग्नये प-
थिकृते कुर्यात्तेनैव पुनः पन्थामेवैति न यज्ञं विच्छिनत्त्यग्नये वा-
जसृतेऽष्टाकपालन्निर्वपेत् ॥ सङ्ग्रामेऽग्निर्वै देवानां वाजसृ-
द्वाजमेष धावति यः सङ्ग्रामञ्जयति तमेव भागधेयेनोपधावति
वाजमेव धावति जयति सङ्ग्राममथो अग्निरिव न प्रति धृषे भ-
वत्यग्नये व्रतपतयेऽष्टाकपालन्निर्वपेद्य आहिताग्निः सन्नव्रत्यञ्चरे-
दानीतो वा एष देवानां य आहिताग्निरदन्त्यस्यान्नं व्रतपतिमेतस्य

व्रतङ्गच्छति य आहिताग्निः सन्नव्रत्यञ्चरत्यग्निर्देवानां व्रतपतिस्तमे-
व भागधेयेनोपधावति व्रतपतेरेवाधि व्रतमालभतेऽग्नये रक्षोघ्नेऽष्टा-
कपालन्निर्वपेत् ॥ आमयावीन्द्रं वै जातं रक्षांस्यसचन्त स आदीय-
मानो रक्षोभिः संमृश्यमानोऽग्निम्प्राविशत्तस्मादग्नौ रक्षांस्यपाह
न्रक्षांस्येतं सचन्ते य आमयाव्यग्निर्देवानां रक्षोहा तमेव भाग-
धेयेनोपधावति सोऽस्माद्रक्षांस्यपहन्त्यमावस्यां रात्रीन्निशि
यजेताऽमावस्यां वै रात्रीन्निशि रक्षांसि प्रेरते पूर्णान्येवैनान्यप-
वपति परिश्रिते यजेत रक्षसामन्तर्हित्यै ॥ वामदेवस्यैतत्प-
ञ्चदशं राक्षोघ्नं सामिधेन्यो भवंति वामदेवश्च वै कुसिदायी चा-
त्मनो राजिमयातान्तस्य कुसिदायी पूर्वस्यातिद्रुतस्य कूबरं
ण्यमृणत्सा द्वितीयमुपपर्यावर्त्ततेषां वाचं वा छेत्स्यामीति स वा-
मदेव उकुख्यमाग्निमऽबिभस्तमवैक्षत स एतत्सूक्तमपश्यत्कृणुष्व
पाजः प्रसितिं न पृथ्वीमिति तामाग्निरनूदुद्रुत्य समदहत्सा दह्य-
माना ह्रदङ्कौसिदम्प्रामज्जयदेतदनूच्यते रक्षसान्दुष्ट्यै ॥

कृणुष्व पञ्चोना राक्षोघ्नं वामदेवस्य गौतमपुत्रस्य ॥
कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवां इभेन । तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ तव भ्रमास आशुया पतन्त्यनुस्पृश धृषता शोशुचानः । तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः ॥ प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ उदग्ने तिष्ठ प्रत्यातनुष्वन्यमित्राँ ओषतात्तिग्महेते । यो नो अरातिं समिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम् ॥ ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ॥ अव स्थिरा तनुहि यातजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ॥ स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो अभिद्यौत् ॥ सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै

सुदिना सा सदिदिष्टिः ॥ अर्चामि ते सुमतिङ्घोष्यर्वाक्सन्ते वावाता जरतामियङ्गीः । स्वश्वास्त्वा सुरथा मार्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥ इह त्वा भूर्याचरेदुपत्मन्दोषावस्तर्दीदिवांसमनु द्यून् । क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवांसो जनानाम् ॥ यस्त्वा स्वश्वः सुहिरण्यो अग्नउपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥ महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वन्नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥ अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायवः सध्यञ्चो निषद्याग्ने तव नः पान्त्वमूर ॥ ये पायवो मामतेयन्ते अग्ने पश्यन्तो अन्धन्दुरितादरक्षन् । ररक्ष तान्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो नाह देभुः ॥ त्वया वयं सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शंसा सूदया सत्यताते नुष्ठुया कृणुह्यहयाण ॥ अया ते अग्ने समिधा

विधेम प्रति स्तोमं शस्यमानङ्गृभाय । दहाशसो रक्षसः पाह्यस्मान्द्रुहो निदो मित्रमहो अवद्यात् ॥

उदस्थाद्धनजिदित्यहोरौशनस्य ब्रह्मजज्ञानमिति स्वयम्भुवो ब्रह्मण ऐन्द्राग्नमिति वायोरार्षम् ॥ उदस्थाद्धनजिद्गोजिदश्वजिद्धिरण्यजित्सूनृतया परीवृतः । एतचक्रेण सविता रथेनोर्जो भागम्पृथिवीमेत्यापृणन् ॥ सं वरत्रान्दधातन निराहावङ्कृणोतन । सिञ्चामहा अवतं वयमुद्रिणं विश्वाहादस्तमक्षितम् ॥ ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ अनाप्ता या वः प्रथमा यस्याङ्कर्माणि कुर्वते । वीरान्नो अत्र मा दभंस्तद्व एतत्पुरो दधे ॥ पर्यू षु प्रधन्व वाजसातये परि वृत्राणि सक्षणिः । द्विषस्तरध्या ऋणया न ईयसे ॥ सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वाअसश्चतः । तस्य स्पशो न निमिषन्ति भूर्णयः पदे पदे पाशिनः सन्ति सेतवः ॥ मलिम्लुचो नामासि त्रयोदशो मास

इन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमसि तन्त्वा प्रपद्ये स-गुः साश्वः सपुरुषः ॥ सह यन्मे ऽस्ति तेन स मे शर्म च वर्म च भव गायत्रींल्लोमभिः प्रविशामि त्रिष्टुभन्त्वचा प्रविशामि जगतीम्मांसेन प्रविशाम्यनुष्टुभमस्थ्ना प्रविशामि पङ्क्तिं मज्ज्ञा प्रविशामि । ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वे देवा नाति विध्य-न्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामु-पगच्छेम जीवाः ॥ अथ वरस्य कन्यापितुश्च कलशपूजनम् ॥ यत्रास्ति माता न पिता न बन्धुः इत्यादि० । तत्सङ्ख्याद्य० , महागणपतये० । अग्नये पुष्टिपतये प्रजापतये ॥ अर्यम्णे गन्ध-र्वाय त्र्यम्बकाय विवाहोद्वाहदेवताभ्यः ॥ अग्नये वायवे सूर्याय चन्द्रमसे विष्णवे प्रायश्चित्तयागदेवताभ्यः । मेषादिभ्यो द्वाद-शलग्नेभ्यः, अश्विन्यादिभ्यः सप्तविंशतिनक्षत्रेभ्यः, वासुदेवाय०द। पंचायतनदेवताभ्यः, अभयङ्कर्यै भग०, क्षेमङ्कर्यै०, सर्वशत्रुघाति-न्यै, इहराष्ट्राधिपतये भैरवाय, इन्द्राय वज्रहस्तायेत्यादि अनन्ता-

दिभ्योऽष्टाभ्यः कुलनागदेव०, अग्न्यादित्याभ्यामित्यादि, हेरुकादिभ्यो वटुकादिभ्यो धूपदीपसंकल्पात्सिद्धिरस्तु धूपो नमः दीपो नमः ॥ गायत्र्यैनमः ओंभूर्भुवःस्वः० ३ ॥ तत्सदद्य० महागणपतेः०, अग्नेः पुष्टिपतेः प्रजापतेः, अर्यम्णः गन्धर्वस्य त्र्यम्बकस्य विवाहोद्वाहदेवतानां, अग्नेः वायोः सूर्यस्य चन्द्रमसः विष्णोः प्रायश्चित्तयागदेवतानां, मेषादीनां द्वादशलग्नानां, अश्विन्यादीनां सप्तविंशतिनक्षत्राणां वासुदेवस्य ८, भवस्येत्यादि विष्णुपंचायतनदेवतानां, अभयङ्कर्याः०, इन्द्रस्य वज्रहस्तस्येत्यादि०, आत्मनो०, आत्मोद्वाहनिमित्तं कन्योद्वाहनिमित्तमर्चामहं करिष्ये ओं कुरुष्व ॥ एवमेवासनम् षष्ठ्यन्तैर्नामभिः ॥ महागणपतये इत्यादिभिर्युष्मान्पूजयामि ओं पूजय ॥ महागणपतिं इत्यादि, अग्निं पुष्टिपतिं प्रजापतिं, अर्यमणं गन्धर्वं त्र्यम्बकं विवाहोद्वाहदेवताः, अग्निं वायुं सूर्यं चन्द्रमसं विष्णुं प्रायश्चित्तयागदेवताः, मेषादीनि द्वादशलग्नानि, अश्विन्यादीनि सप्तविंशति नक्षत्राणि, वासु-

देवादीन् विष्णुपञ्चायतनदेवताः, अभयंकरीं०, इन्द्रं सुराधिपतिं वज्रहस्तमित्यादि, हेरुकादीन् वटुकादीनावाहयिष्यामि ओमावाहय, यवान्विकीर्य ॥ शन्नोदेवी० ॥ लाजाश्च० ॥ महागणपतये०, अग्नये पुष्टिपतये० इत्यादि पूर्ववत् सर्वं, पाद्यंनमः ॥ पुनः शन्नोदेवी० ॥ आपः क्षीरं० । महागणपते०, अग्ने पुष्टिपते प्रजापते, अर्यमन् गन्धर्व त्र्यम्बक विवाहोद्वाहदेवताः, अग्ने वायो सूर्य चन्द्रमः विष्णो प्रायश्चित्तयागदेवताः, मेषादीनि द्वादशलग्नानि, अश्विन्यादीनि सप्तविंशति नक्षत्राणि वासुदेवादयः० अभयङ्करि० इन्द्र वज्रहस्त० इत्यादि सर्वं इदं वोऽर्घ्यं नमः ॥ महागणपतये० इत्यादिभिश्चतुर्थ्यन्तैर्नामभिर्गन्धार्घपुष्पाणि धूपदीपादि च दक्षिणान्तं सर्वम् ॥ तद्विष्णोरिति कलशे पुष्पम् ॥

अथ जातीफल सर्वगन्धद्रव्ययुत जलपात्रे सच्छिद्रे संवःसृजामीतिद्वाभ्यां पुष्पाणां त्रितयं क्षिप्त्वा वराभिषेकमृत्विक् कुर्यात् ॥ सर्वगन्धैरिति—

सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नपयित्वाऽहतेन वाससा प्रच्छाद्य ॥ सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यं सवितर्वार्याणि दिवे दिव आसुवा भूरि पश्वः ॥ भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्योश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ येभिः शिल्पैः पप्रथानामदृंहद्येभिर्द्यामभ्यपिंशत्प्रजापतिः । येभिर्वाचं विश्वरूपेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्धि ॥ येभिरादित्यस्तपति प्र केतुभिर्येभिः सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययंस्तेनेममग्न इह वर्चसा समङ्ग्धि ॥ आयम्भातु शवसा पञ्च कृष्टीरिन्द्र इव ज्येष्ठो भवतु प्रजानाम् । अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु रजसा विमानम् ॥ यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधि विश्रयेमम् ॥ व्याघ्रो वैय्याघ्रे अधि विक्रमस्व दिशो महीः । विशस्त्वा सर्वा वाञ्छ-

न्त्वापो दिव्याः पयस्वतीः ॥ या आपो दिव्याः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवासः । तासान्त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसासिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा त्वा सविता करत् ॥ इन्द्रं विश्वा अवीवृधत्समुद्रव्यचसङ्गिरः । रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ अभि प्रेहि वीरयस्वोग्रश्चेत्ता सपत्नहा । आतिष्ठ मित्रवर्धनस्तुभ्यन्देवा अधिब्रुवन् ॥ आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥ आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियो वसानश्चरति स्वरोचिः । महत्तदस्यासुरस्य नामा विश्वरूपो अमृतानि तस्थौ ॥ अनु त्वेन्द्रो मदत्वनु बृहस्पतिरनु सोमो अन्वग्निरावीत् । अनु त्वा विश्वे अवन्तु देवाः सप्त राजानो य उदाभिषिक्ताः ॥ अनु त्वा मित्रावरुणा इहावतामनु द्यावापृथिवी ओषधीभिः । सूर्योऽहोभिरनु त्वावतु चन्द्रमा नक्षत्रैरनु त्वावीत् ॥ द्यौश्च त्वा

पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु । अनु स्वधा चिकिते सोमो अग्निरनु त्वावतु सविता सवेन ॥ एना व्याघ्रं परिषस्वजानं सिंहं हिन्वन्ति महते धनाय । मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषन्न (सुभ्व) सुत्वस्तास्थिवांसम् ॥

अपां यो द्रवणे रसस्तमहमस्मा अमुष्मा आमुष्यायणाय तेजसे वर्चसे गृह्णाम्यऽपां य ऊर्मौ रसस्तमहमस्मा अमुष्मा आमुष्यायणायौजसे क्षत्राय गृह्णाम्यऽपां यो मध्ये रसस्तमहमस्मा अमुष्मा आमुष्यायणाय प्रजायै पुष्ट्यै गृह्णाम्यऽपां या यज्ञिया तनूस्तामहमस्मा अमुष्मा आमुष्यायणायायुषे दीर्घायुत्वाय गृह्णामि ॥ रथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमागाद्वर्चसा संविदाना ॥ या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वन्तः । इन्द्रं या० ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या । इन्द्रं या० ॥ या राजन्ये दुन्दुभा आयता-

यामश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं या० ॥

राळसि विराळसि सम्राळसि स्वराळसीन्द्राय त्वा मधुमते मधुमन्तं श्रीणामीन्द्राय त्वौजस्वत ओजस्वन्तं श्रीणामीन्द्राय त्वा पयस्वते पयस्वन्तं श्रीणामीन्द्राय त्वाऽऽयुष्मत आयुष्मन्तं श्रीणामि वर्चोऽसि तन्मे नियच्छ तत्ते नियच्छाम्योजोसि तन्मे नियच्छ तत्ते नियच्छामि पयोऽसि तन्मे नियच्छ तत्ते नियच्छाम्यायुरसि तन्मे नियच्छ तत्ते नियच्छामि ॥

वर्चस्वदस्तु मे मुखं वर्चस्वच्छिरो अस्तु मे । वर्चस्वान्विश्वतः प्रत्यङ्वर्चसा संपिपृग्धि मा ॥ ओजस्वदस्तु मे मुखमोजस्वच्छिरो अस्तु मे । ओजस्वान्विश्वतः प्रत्यङ् ओजसा संपिपृग्धि मा ॥ पयस्वदस्तु मे मुखं पयस्वच्छिरो अस्तु मे । पयस्वान्विश्वतः प्रत्यङ् पयसा संपिपृग्धि मा ॥ आयुष्मदस्तु मे मुखमायुष्मच्छिरो अस्तुमे । आयुष्मान्विश्वतः प्रत्यङ् आयुषा संपिपृग्धि मा ॥ इदमहङ्गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथ-

न्तरेण साम्नाग्निना देवतया तेजस्ते वर्च आददेऽसा, इदमहं त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नेन्द्रेण देवतयौजस्ते क्षत्रमाददेऽसा, इदमहं जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्ना विश्वैर्देवैर्देवतया प्रजान्ते पुष्टिमाददेऽसा, इदमहमानुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना प्रजापतिना देवतयायुस्ते दीर्घायुत्वमाददेऽसौ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथासत् ॥ विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शतः । ते त्वा घृतस्य धारया श्रैष्ठ्याय समसूषत ॥ यतो वातो मनोजवा यतः क्षरन्ति सिन्धवः । तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसासिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा त्वा सविताकरत् ॥ इन्द्रं विश्वा अवीवृधत्समुद्रव्यचसङ्गिरः । रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ अपां यो द्रवणे रसस्तेनाहमिममसुमासु-

ष्यायणममुष्याः पुत्रन्तेजसे ब्रह्मवर्चसायाभिषिञ्चाम्यपां य ऊर्मौ रसस्तेनाहमिममममुमामुष्यायणममुष्याः पुत्रमोजसे क्षत्त्रायाभिषिञ्चाम्यपां यो मध्ये रसस्तेनाहमिममममुमामुष्यायणममुष्याः पुत्रं प्रजायै पुष्ट्यात्राभिषिञ्चाम्यपां या यज्ञियास्तनूस्तयाहमिममममुमामुष्यायणममुष्याः पुत्रमायुषे दीर्घायुत्वायाभिषिञ्चामि ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि ॥ कोऽसि को नामासि कस्मै त्वा काय त्वा सुश्लोका ३ सुमङ्गला ३ सत्यराजा ३ न् ॥ राये जातः सहसे वृद्धः क्षत्राणां क्षत्त्रभृत्तमो वयोधाः । महान्महित्वा संस्तभ्ने क्षत्ते

राष्ट्रे च जागृहि ॥ नव कृत्व इन्द्रो राजा सविता त्वाभिषिञ्चतु । मित्रो वायुर्बृहस्पतिर्धाता क्षत्रन्दधातु ते ॥

(वरातिलकं) अदितिस्त्वा सुष्वतु राजन्महते क्षत्राय महते ज्यैष्ठ्याय महते राज्याय महते जानराज्याय महते विश्वस्य भुवनस्याधिपत्याय समास्त्वाग्ने ॥ (पुनरभिषेको वरस्य) देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या वाचा यन्तुर्यन्त्रेणेममुमामुष्यायणममुष्याः पुत्रमग्नेः साम्राज्येनाभिषिञ्चामीन्द्रस्य साम्राज्येनाभिषिञ्चामि ॥

(वध्वभिषेकः) चतुःशिखण्डा युवतिः सुपत्नी विनीयमाना महते सौभगाय । घृतन्दुहानामदितिर्जनाय सा मे धुक्ष्व सर्वान्भूतिकामान् ॥ उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि । सुमिती मीयमानो वर्चोधा यज्ञवाहसे ॥ समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् । आरे असदमतिं बाधमान उच्छ्रयस्व महते सौभगाय ॥ हिङ्कृण्वती वसुपत्नी वसूनां वत्स-

मिच्छन्ती मनसाभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ (वधूतिलकं) यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवस्योनम् । अश्विनं सुपुत्रिणं वीरवन्तं गोमन्तं रयिन्नषते स्वस्ति ॥ (यजमानाभिषेकः) मच्चू देववतो रथः शूरो वा पृत्सु कासु चित् । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ नकिष्टङ्कर्मणा नशन्न प्रयोशन्न योषति । देवानां य० ॥ न यजमान रिष्यसि न सुन्वान न देवयोः । देवानां य० ॥ असदत्र सुवीर्यमुत त्यदाश्वश्व्यम् देवानां य० ॥ धनञ्जयः सहमानः पृतन्सुरग्न इषमूर्जं यजमानाय देहि । विश्वाः पृतनाः सहमानः सहोभिरन्नं नो धेहि बहुधा विरूपं यत्प्रजा अनुजीवन्ति कामाः ॥

(यजमानतिलकं) यानि दक्षिणानि च्छिद्राणि तान्युत्तराणि कुर्याद्यजमानलोके वा एतानि यानि दक्षिणानि भ्रातृव्यलोक उत्तराण्युत्तरमेव यजमानमऽयजमानाद्भ्रातृव्यात्करोत्युत्तरो हि



यजमानोऽयजमानात् ॥ इत्यभिषेकमंत्राः समाप्ताः ॥



लग्नवेलायां स्वस्तिरेखां लिखित्वा ॥

शुक्लाम्बरधरं० बिभ्रद्दक्षिणे० सुमुखश्चैकदन्तश्च० ॥ इत्यादि मंगलं पठेत् ॥ (पञ्चदशी काण्डिका (१) अथ ब्राह्मदेयायाः प्रदानविधिं वक्ष्यामः ॥ (२) शुद्धपक्षस्य पुण्याहे पर्वणि वोदगग्रान्दर्भानास्तीर्य तेषूपविशतः प्राङ्मुखः प्रतिग्रहीता सामात्यः प्रत्यङ्मुखः प्रदाता ॥ (३) मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तेषूदकं सन्निधाय व्रीहीन्यवान्वोप्य दक्षिणत उदङ्ङासीन ऋत्विगुपयमनं कारयेत् ॥ (४) समेतेष्वाह ददानीति प्रतिगृह्णामीति त्रिरावेदयते ॥ (५) एतद्वः सत्यमित्युक्त्वा समाना वः सं वो मनांसीति ऋत्विगुभौ वधूवरौ समीक्षमाणो जपति ॥ भगवन्कन्यां ददात्वस्मै भवानिति त्रिर्दातारं प्रचोदयात् ॥ भगवन्कन्यां प्रतिगृह्णात्वस्माद्भवानिति त्रिर्वरम् ॥ (एवं त्रिर्व्यत्यासम्)

ओं भगवन्कन्यां ददानि ते ३ । इति (त्रिर्दातारं जल्पयेत) ॥ उदकपूर्वं दत्तायां कन्यायां प्रणवोच्चारणपूर्वं ॥ ओं भगवन्कन्यां प्रतिगृह्णामि ३ ॥ इतित्रिर्वरम् ॥ तुभ्यं दत्ता कुमारी धर्मे चार्थे च कामे च त्वयेयं परिचरणीया । मह्यं प्रतिगृहीता वधूर्धर्मे चार्थे च कामे च मयेयं परिचरणीया ॥ एतद्वः सत्यं ३ ॥ इत्यृत्विक् ॥ एतन्नः सत्यं ३ ॥ इति दातृवरौ प्रतिवदतः । (एवं त्रिर्व्यत्यासम्) ॥ ततो वरस्योत्तरतो गृहीतहस्तायामेव उपविष्टायां वध्वां समाना वः सं वो मनांसीति ऋत्विग्वधूवरौ समीक्षमाणो जपति ॥ (जपादूर्ध्वं वरस्योत्तरत उपवेशयेदित्यन्ये) ।

समाना व आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहासति ॥ सं वो मनांसि सं व्रता समु चित्तान्याकरम् । अमी ये विव्रताः स्थन तान्वः सन्नमयामसि ॥ हस्तौ विमुच्य ॥ (चतुर्विंशी काण्डिका) ॥

(१) षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग्राजा विवाह्यः प्रियः स्ना-

तकइति ॥ (२) अथैनमर्हयन्ति ॥ (३) आदौ च कर्मणः ॥ (४) अर्घ्यमुदकं सौषधं दर्भा इति ॥ (५) कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसा पिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते ॥ (६) मयि दोहोसि विराजो दोहः पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते ॥ (पाद्यमर्घ्यं मधुपर्कं च विवाह्य इत्यर्थः) भगवन्विष्टरो विष्टरो विष्टरः, इदमासनमास्यताम् ॥ (७) विष्टरोऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति ॥ (८) विष्टर आसीनायैकैकं त्रिः प्राह॥ (९) नैव भोइत्याह न मार्षेति ॥ (१०) शन्नोदेवीरित्यपोऽभिमन्त्र्य पाद्याभिः प्रक्षालयते ॥ उशनसः काव्यस्य । शन्नोदेवीः०॥ लाजाश्च० भगवन्पाद्यं ३ । मयिदोहोसीतिवरः ॥ भगवन्पाद्यं ददानि ते ३ ॥ भगवन्पाद्यं प्रतिगृह्णामि ३ ॥ पाद्यपात्रे गृहीते सति तद्दक्षिणेन पाणिनाऽदाय सव्ये पाणौ निधाय स्वयं पादावनेनिज्यात् ॥ दक्षिणं पादमवनेनिज इदमहमस्मिन्कुले ब्रह्म-

वर्चसं दधाम्युत्तरं पादमवनेनिज इदमहं मां मयि तेजो वीर्य-मन्नाद्यं प्रजां पशून्ब्रह्मवर्चसन्दधामि ॥ (११) आपोहिष्ठीयाभि-रर्घ्यं परिगृह्य । शन्नोदे० । आपःक्षीरं० भगवन्नर्घ्यं ३ । मयिदोहो-सीतिवरः ॥ भगवन्नर्घ्यं ददानि ते ॥ इति त्रिर्दात्रोक्तः पाद्यपा-त्रवदर्घ्यपात्रमादाय भगवन्नर्घ्यं प्रतिगृह्णामीतित्रिरुक्त्वाऽऽपोहि-ष्ठेति तिसृभिः कुशपवित्रेण वरोऽपः क्षिपेत् ॥ आपो हि ष्ठा मयोभुवइत्यादि० । ततो विष्णवे महाराजाय समालभनं गन्धो नमः । विष्णुपत्न्यै दुहित्रे लक्ष्म्यै समालभनं० । एवमर्घपुष्पधू-पदीपादि ॥ यज्ञोपवीतमिति० ॥ विष्णवे महाराजाय यज्ञोप-वीतं वासो नमः ॥ विष्णुपत्न्यै० वासोनमः ॥ विष्णोर्महारा-जस्य सपत्नीकस्यार्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्त्वित्युक्त्वा अन्नंनमः २ इत्युदित्वा च ॥ [सावित्राणीति मधुपर्कः ॥ मधुपर्कं विदुस्त्र्यङ्गं याज्ञिका यज्ञकर्मणि । माक्षिकं च घृतं चैव सुजातं शोभनं दधि] ॥ भगवन्मधुपर्को मधुपर्को मधुपर्कः ॥ मयिदोहोसी-

त्यादिवरः ॥ भगवन् मधुपर्कं ददानि ते ३ ॥

(इति त्रिराह दाता) । (सावित्राणीति प्रतिग्रहीता) ॥ सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां ॥ भगवन् मधुपर्कं प्रतिगृह्णामीति त्रिः ॥ (प्रतिग्रहीताऽञ्जलिना प्रतिगृह्य सव्ये पाणौ निदधाति) विष्टरोस्यन्तारिक्षमधिविश्रयस्व (इति वर्षिष्ठपात्रस्योपरि स्थितं विष्टरमुत्क्षिप्य विष्टरमवकृष्य, उरुत्वेत्यवसार्य)=(उद्घाट्य)

उरु त्वा वाताय, ॥ (तच्चक्षुरित्यवेक्ष्य) । तच्चक्षुर्देवहितं-पुरस्तात् शुक्रमुच्चरत् । पश्येम शरदां शतं जीवेम शरदां शतम् ॥ ( पृथिव्यास्त्वेति मधुपर्कपात्रं विष्टरेऽधःस्थिते भूमौ निधाय ) पृथिव्यास्त्वानाभौ साधयामि॥(मधु वाता ऋतायते इति तिसृभिः प्रदेशिन्या प्रदक्षिणमालोडयति) ॥ नारायणस्यार्षम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः॥ मधुनक्तमुतोषसा मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता॥

मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥

वसवस्त्वाऽग्निराजानो भक्षयन्तु, पितरस्त्वा यमराजानो भक्षयन्तु, रुद्रास्त्वा सोमराजानो भक्षयन्तु, आदित्यास्त्वा वरुणराजानो भक्षयन्तु, विश्वे त्वा देवा बृहस्पतिराजानो भक्षयन्त्विति (प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निर्मार्ष्टि) ॥ (यन्मधुनो मधव्यस्येति च) ॥ यन्मधुनो मधव्यस्य परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं ॥ अथ्यै विद्यायै यशोसि श्रियै यशोसि यशसे ब्रह्मणो दीप्तिरसि ॥

(पवित्रंनिवार्य) सत्यश्रीर्यशःश्रीर्मयि श्रीः श्रीः श्रयतामिति ॥ (मधुपर्कस्य चतुः प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति) ॥ भगवन्नाचमनीयमाचमनीयमाचमनीयमित्युक्तेऽमृतोपस्तरणमसीत्यप आचामति ॥ [तस्मा असिपाणिर्गां प्राह १५ ॥

तां शास्ति १६ ॥ ममचामुष्य च पाप्मानं जहि हतो मे पाप्मा पाप्मानं मे हत १७ ॥ ओङ्कुरुतेति १८ ॥ चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् ॥ एष आद्योपायः १९ ॥ यद्युत्सृजेन्माता रुद्राणामिति जपेत् ॥ माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ठ ॥ सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये विश्वदानी पिब शुद्धमुदकमाचरन्ती २० ॥ ओमुत्सृजत तृणात्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमङ्गं वा २१ ॥ नाऽमांसो मधुपर्कः स्यादिति ह विज्ञायते २२ ॥ अपिवा घृतौदन एव स्यात् २३ ॥ मधुपर्के च यज्ञे च पितृदैवतकर्मणि । अत्रैव पशवो हिंस्या नान्यत्र मनुरब्रवीत्] ॥ (इति मधुपर्कविधिः) ॥ (योन्यपोरुत) ॥ (विष्णवे यज्ञोपवीत दक्षिणां दद्यात्) ॥ (गंगऽयस) ॥ (अन्तरा इत्युदकमानीय) । (पञ्चविंशी काण्डिका) अन्तरा

ऋजवः सन्तु पन्था येभिस्सखायो यन्ति नो वरेयम् । समर्यमा सम्भगो नो निनीयात्सञ्जास्पत्यं स्वयममस्तु देवाः ॥ (इत्युदाहारं प्रहिणोति ॥ शमीशाखया सपलाशया पिधायाहरेत् ॥ यदुक्तम् ॥ शमीशाखा पलाशी च मन्त्रश्चोदकपूर्वकम् । चतुर्विधं तु यत्पूतं तच्च गाङ्गोदकं स्मृतम् ॥ एतासामेवापामुदकार्थान्कुर्वीत ॥) (ततः स्नानमण्डपं कन्यां नीत्वा चतुष्पादे भद्रपीठे संस्थाप्य शन्नइति स्नापयेत् ) । शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः । शन्नः समुद्रिया आपः शमु नः सन्तु कूप्या याइमाः ॥ इत्यऽकेवलाभिरद्भिः स्नाताम् । यदुक्तं । (सर्वौषधीभिस्संयुक्ताः शुष्का आमलकत्वचः । स्नाने माङ्गलिके प्रोक्ता अलक्ष्मीनोदनं हितम ) । (या अकृन्तन्निति वसनहस्तः परिधानार्थं प्रचोदयति ऋत्विक् ) । या अकृन्तन्या अवयन्या अतन्वत याश्च देवीरन्तां अभितोऽततन्थ (ददन्त ) । तास्त्वा देवीर्जरसा संव्ययन्त्वायुष्यतीदं परिधत्स्व वासः ॥ (इत्यहतं वासः परिधाप्या-

शासानेत्यन्तरतो मौञ्जेन दार्भेण योक्त्रेण वा स्वयंवधूः सन्नह्य-ति ॥ आशासानेति वधूरिमं मन्त्रं वाचनीया ॥) आशासाना सौमनसं प्रजां सौभाग्यं रयिम्। अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम् ॥ (प्रेतोमुञ्चामीति तिसृभिः स्नानदेशादुदानीय या-अकृन्तन्नित्येतयैवोत्तरं च वासः परिधापयति) ॥ प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगा सति ॥ पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन। गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथे मा वदासि ॥ माविदन्परिपन्थिनो य आसीदन्ति दम्पती । सुगेभिर्दुर्गमती तामपद्रान्त्वरातयः ॥ (इत्युदानीयोक्तं वाससः कर्म) [याअकृन्तन्निति॰] ॥ आचारिकाणि ॥ ७ ॥ [अस्मिन्नवसरे देशजातिकुलोचितानामाचारिकाणां मङ्गल्यानां कर्मणां कालः । यथा कश्मीरेषु श्वश्रूरन्या वाऽविधवा वधूवरयोरादौ पादाभ्यामारभ्य शिरो यावत्पूजां विधाय पुनः शिरसि मङ्गल्यमालां बध्नाति] ॥

यजमानपत्नीमानीय तीर्थैस्नेयमित्यादि आत्मने नारायणाद्याधारशक्त्यै धूपदीपसंकल्पात्सिद्धिरस्तु धूपोनमः दीपोनमः ।
ओंतत्सदद्य० महेश्वरादिभ्यो गौर्यादिभ्यश्च कन्योद्वाहनिमित्ते धूपदीपसंकल्पात्सिद्धिरस्तु धूपोनमः दीपोनमः ॥

महेश्वरस्त्र्यम्बकश्च ईशानः शिव एव च । भवः शर्वश्च रुद्रश्च दक्षिणादिक्रमेण तु इति [वरस्य पादजानुस्कन्धशिरस्सु सप्तसु स्थानेषु श्वश्रूः पुष्पाणि निदध्यात्] यथा—महेश्वराय नमः दक्षिणपादे । त्र्यम्बकाय नमः वामपादे । ईशानाय नमः दक्षिणजानुनि । शिवाय नमः वामजानुनि । भवाय नमः दक्षिणस्कन्धे । शर्वाय नमः वामस्कन्धे । रुद्राय नमः शिरसि ॥
गौरी चैव तु गायत्री सावित्री च सरस्वती । उमा कान्ता भवानी च वामावर्तेन पूजयेत् ॥ यथा—गौर्यै नमः वामपादे । गायत्र्यै नमः दक्षिणपादे । सावित्र्यै नमः वामजानुनि । सरस्वत्यै नमः दक्षिणजानुनि । उमायै नमः वामस्कन्धे । कान्तायै

नमः दक्षिणस्कन्धे । भवान्यै नमः शिरसि ॥ रुद्राय महाराजा-य समाल० । रुद्रपत्न्यै दुहित्रे भवान्यै समा० । एवमर्घपुष्पधूपदी-पाः ॥ एवं पूजां विधाय शिरसि मंगल्यमालां बध्नीयात् ॥ पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरी-र्वीरुधः पारयिष्णवः ॥ रुद्राय महाराजाय मङ्गल्यमाल्यं वासो नमः । एवं रुद्रपत्न्यै भवान्यै मंगल्यमाल्यं वासो नमः । रुद्रस्य महाराजस्य सपत्नीकस्य अर्घ्यदानाद्यर्चनविधिः० ॥ अन्नंनमः २ इतिचोक्त्वा । शन्नोदेवी० रुद्राय महाराजाय अपोशानं० । पुनः शन्नोदेवी रुद्राय महाराजाय दक्षिणायै० । (मंगल्यमाल्यदक्षिणा) नैवेद्यम्—अमृतमस्तु इत्यादि० । (वधूवरयोर्मुखेपि नैवेद्यं समर्प्य शेषांशो वरमातुलाय देयः) ॥ [आचारिकाणि द्रव्याणि वस्त्रा-ण्याभरणानि च । मणिमुक्ताप्रवालानि यथाशक्ति प्रदीयते ॥ गो-भूहिरण्यमश्वांश्च वस्त्राणि विविधानि च । अन्यानि चैव दानानि यथाविभवमर्पयेत् ॥ अस्मिन्नवसरेऽलङ्करणस्वदायेषु परस्परं च-

विवाहविधौ

टोपचटिका ग्राह्या] ॥



(तूष्णीं निर्मन्थ्यं आष्ट्रात्सान्तपनं यत्र दीप्यमानं वा बहिरग्निमुपसमाधाय सूतकाग्न्यादिवर्जम्) ॥

पात्रं तिला० ॥ अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ॥ परिस्तीर्य १६ । अग्नये समनमत्० । वायवे सम० सूर्याय सम० वरुणाय सम० साम्ने सम० ब्रह्मणे सम० राज्ञे सम० रथाय समनमत्० ॥ (उद्वाहेऽक्षतसक्तवो हविः । विवाहे लाजाः) उत्तरतः संस्तीर्णे० ॥ अग्नये पुष्टिपतये प्रजापतये जुष्टं निर्वपामि । [सक्त्वर्थं यवान्निर्वपेत्] । एवं प्रोक्षामि ॥ [अक्षतसक्तूनां मेक्षणं न भवति] । पृश्न्याः पयोसीत्यादि ॥ इदंहविः प्रजननं०। आत्मनो० अग्नये पुष्टिपतये प्रजापतये अग्नये वैश्वानराय इदमाज्यमर्पयामि नमः ॥ [वरवधूयजमानानामाज्यदर्शनम्] । (आज्यभागान्तं हुत्वा) । (अपरेणाग्निमऽनो रथं वाऽ-

वस्थाप्य वधूवरौ प्राङ्मुखौ तिष्ठन्तौ योगे योगे इति मंत्रावृत्त्या युनक्ति, कश्यपस्य) । योगे योगे तवस्तरं वाजे वाजे हवामहे सखाय इन्द्रमूतये ॥ (दक्षिणमितरमुत्तरमितरां) । [तूष्णीं विमुच्य ।] खे रथस्य खेऽनसः खे युगस्य शतक्रतो । अपालामिन्द्रस्त्रिष्पूत्वा करोतु सूर्यवर्चसमिति । [हिरण्यं निष्कर्यं दर्भैर्बद्ध्वाऽध्यधि मूर्धनि दक्षिणस्मिन्युगतर्मण्यद्भिरवक्षारयते ॥ शन्ते हिरण्यमिति] । शन्ते हिरण्यं शमु सन्त्वापः शन्ते मेथी भवतु शं युगस्य तर्म्म । शन्त आपः शतपवित्रा भवन्त्वेना पत्या तन्वा संसृजस्वेति ॥ [ततो वरस्योत्तरतो वधूमुपवेश्य दक्षिणतः पुमान्भवत्यथ जुहोति ।] अग्नये जनिविदे स्वाहा । सोमाय जनिविदे स्वाहा । गन्धर्वाय जनिविदे स्वाहा । (आयुषः प्राणमिति सन्ततीर्जुहोति) ॥ आयुषः प्राणमित्येकादश नाभेर्भौवनस्य। आयुषः प्राणं सन्तनु स्वाहा इत्यादि० । दिवः स्वरित्यन्तम् ॥ [आकूतमिति त्रयोदशाहुतीर्द्वादशगृहीतेन प्रतिमन्त्रं जयाञ्जुहु-

यादिति लौगाक्षिः] ॥ तेजोसि ४ ॥ (इति त्रिवारम्) ॥ आकूतश्चाकूतिश्चेत्यादि० पृतना अभिष्याम स्वाहा इत्यन्तम् ॥

[चतुर्गृहीतं जुहोत्यभ्यातानैः] । तेजोसि० ॥ [अभ्यातानान्देवानाम्] । बृहस्पतिपुरोहिता इत्यादि० देवहूत्यामिति यावत् ॥

[ऋताषाडिति द्वादशभिर्वडन्तैर्हुत्वा [स्रुवेण] । राष्ट्रभृतो राष्ट्रभृतामौपनिषदानामृषीणाम्] ॥ ऋताषाड् ऋतधामाग्निरिति० । स नो भुवनस्य पते इति त्रयोदशी रथमुखे ॥

अग्निर्भूतानामित्येकविंशतिमाधिपत्यानि जुहोति । अग्निर्भूतानामधिपतिः स मावतु तस्मै स्वाहा । यमः पृथिव्या अधि० । वायुरन्तरिक्षस्याधि० । सूर्यो दिवोऽधिप० । चन्द्रमा नक्षत्राणामधि० । विष्णुर्दिशामधि० । पूषा पथीनामधि० । त्वष्टा रूपाणामधि० । सविता प्रसवानामधि० । इन्द्रो ज्येष्ठानामधि० । मित्रः सत्यानामधि० । वरुणो धर्माणामधि० । रुद्रः पशूनामधि० । बृहस्पतिर्ब्रह्मणामधि० । ब्राह्मणो वाचामधि० । सोम ओषधी-

नामधि० । समुद्रः स्रवत्यानामधि० । अन्नं साम्राज्यानामधिपतिस्तन्मावतु तस्मै स्वाहा ॥ गायत्री छन्दसामधिपत्नी सा मावतु तस्यै स्वाहा । मरुतो गणानामधिपतयस्ते मावन्तु तेभ्यः स्वाहा । पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नो ऽवन्त्वस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्मिन् क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यान्देवहूत्यां स्वाहा ॥ आकूत्यै त्वा स्वाहा । कामाय त्वा स्वाहा । समृद्ध्यै त्वा स्वाहा । [हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचम् ॥] [सरितां काश्यपीनां सरितो यज्ञकीर्तिमिच्छमानानाम्]।

ओं हिरण्यगर्भः० १ । यः प्राणतो० २ । य ओजोदा०३। येन द्यौरुग्रा० ४ । य इमे द्यावा० ५ । यस्येमे० ६ । आपो ह यन्महती० ७ । आ नः प्रजाञ्जन० ८ ॥ [ओंभूःस्वाहेति महाव्याहृतिभिश्चतसृभिः] ॥ ओं भूः स्वाहा ओं भुवः स्वाहा ओं स्वः स्वाहा । ओं भूर्भुवः स्वः स्वाहा ॥ [अग्न आयूंषीत्यग्निपावमानीभिस्तिसृभिर्हुत्वा हुत्वा कन्याया मूर्धनि सम्पातानवनयेत्

या ते पतिघ्नीरिति] । (अग्नआयूंषीत्यग्नौ ॥ कूश्मर्षीणाम् )॥

अग्न आयूंषि पवस आसुवोर्जमिषञ्च नः । आरे बाधस्व दुश्छुनाम् स्वाहा ॥ या ते पतिघ्नी तनूरपतिघ्नीं ते तां करोमि स्वाहा ॥ (इति स्वाहान्तेन वध्वा मूर्धन्यवनयेत्) (एवमुत्तरत्र)॥ (अग्निर्ऋषिरित्यग्नौ) ॥ अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् स्वाहा । (या तेऽपुत्रियेतिमूर्धनि) यातेऽपुत्रिया तनूः पुत्रियान्ते तां करोमि स्वाहा । (अग्ने पवस्वेति अग्नौ ॥) अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधद्रयिम्मयि पोषम् स्वाहा ॥ या तेऽपशव्या तनूः पशव्यां ते तां करोमि स्वाहा (इतिमूर्धनि) ॥

प्राक् पाणिग्रहणाद्घृतसक्तूनां यागः । अग्निं पुष्टिपतिं प्रजापतिं च यजेत ॥ तेजोसि० ॥ अग्निना रयिमश्नवत्पोषमेव दिवे दिवे । यशसं वीरवत्तमम् स्वाहा ॥ प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुम स्तन्नो

अस्तु वयं स्याम पतयो रयीणाम् स्वाहा ॥

(उदगग्नेर्दर्भेषु प्राचीमवस्थाप्य शुचिः पुरस्तात् प्रत्यङ्ङुपयन्ता) ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामीति (हस्तं गृह्णाति दक्षिणमुत्तानं साङ्गुष्ठं नीचारिक्तमरिक्तेनैवं सव्यं सव्येन) ॥

(गृभ्णामीति चतस्रो वरं वाचयति) ॥ गृभ्णामि ते सुप्रजास्त्वाय हस्तौ मया पत्या जरदष्टिर्यथासत् (सः) । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः १ ॥ तां पूषञ् शिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् २ ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ३ ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयोऽहं मनुष्यजः ४ इति ॥

[ततो गाथा वरं वाचयति ॥ सरस्वति प्रेदमवेत्यनुवाकम् ।

उभावित्येके] ॥ सरस्वति प्रेदमव सुभगे वाजिनीवति । यान्त्वा विश्वस्य भूतस्य प्रागायाम्यस्याग्रतः ॥ १ ॥ याग्रे सर्वं समभंर-[1] यस्यां विश्वमिदं जगत् । तामद्य वाचं गास्यामि या स्त्रीणामुत्तमं मनः ॥ २ ॥ य इह पूर्वे जना आसन्पूर्वे पूर्वतरेभ्यः । मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा देवेभ्य आतपत् ॥ ३ ॥ य एति सर्वतः प्राग्भ्यो दिग्भ्योऽधिपवमानः । मूर्धन्वान्० ॥ ४ ॥ स भगवो न मरिष्यस्यहश्चेदस्मि भेषजम् । मूर्धन्वान्० ॥ ५ ॥ हिरण्यवर्णो वैरूपः स त्वा मन्मनसङ्करोतु । यद्राजा याति समितिं समुद्रमिव सौभ्रवः ॥ ६ ॥ न वातस्याभि वायते नोद्धातस्याभि धीयते । न वातस्य धुरं वहतो नोद्धातस्यापमीयते[2] ॥ ७ ॥ आ सत्यहरितो रथः सौभ्रवः सुहिरण्ययः । तं वात इदुग्रजीयत्युद्धातो हृदया धुरा ॥ ८ ॥ तवैव राजन्दुन्दुभयस्तव दुन्दुभिरानकः । तव वातोद्धाता अश्वौ तव चैत्ररथं वनम् ॥ ९ ॥ ते शुक्रं शक्र-

१ समभवदित्यपि ॥ २ नेद्धातस्याद्धधीयते ।

स्याविन्दन्पराश्वन्निहितङ्गुहा । मूर्धन्वांस्तेभ्यो गन्धर्वः पुरा जत्रु-
भ्य आतृदः ॥ १० ॥ हिरण्यवर्णं सुभृतं शोभमानं कन्याया हस्तं
परिगृह्य पुण्यम् । सा पुत्रकामा सुभगाय भर्त्रे भव वशीया-
न्गिरिवास्थिराय ॥ ११ ॥ वैरम्पे मुनिपर्वते गिरौ हरितसङ्काशे।
संकल्परमणोऽमरा उभौ सुमनसौ चरावः ॥ १२ ॥ आणिव र-
थवेष्ठासि वने वारिवर्षण्ये । अप्सराः सूर्यवर्चसिनी
वशिनी मन्मना भूयाः ॥ १३ ॥ यासा उपरि निष्ठाति वने वा-
रिवर्षण्ये । वसुगा सूर्यवर्चसिनी वशिनी मन्मना भूयाः॥१४॥
अश्वत्थक उपरि श्येनो रमणीयतरो नाम । तस्मिन्ह रम्भा र-
मते शक्र इव परितकम्यायाम् ॥ १५ ॥ आस्यन्दमाना सुभगे
निर्गिरिभ्यः सरस्वति । मातेव दुहितृभ्यः कुल्याभ्यो विभजा
वसु ॥ १६ ॥ मध्यं तच्छन्दस आहुर्यत्रादधुर्नाम परेति देवाः ।
अरुणपिशङ्गोऽश्वोऽस्य दक्षिणा यस्तद्वेद स इहागन्तुमर्हति॥१७॥
इषीकवर्णो लेखभ्रूः सुभगे सुस्मिते । मूर्धन्वांस्त्वा गन्धर्वो माम-

भिनियच्छतु ॥ १८ ॥ उभये त्वा देवगन्धर्वाः सध्यञ्चो विह्वयामहे । तेषां ऽन्यतरान्कामयसे तानभ्येहि सरस्वति ॥ १९ ॥ अभ्यावर्तेऽहन्देवान्गायतः कामयामहे । गायन्तं स्त्रियः कामयन्ते न तथा ब्रह्मवादिनम् ॥ २० ॥ या सा उपरि पर्वत आत्मना रममाणेव । द्यौमंमूर्द्धा ह वा असि त्वोन ओजसि शृणोत्विति ॥ २१ ॥ [यदि पृथक्तन्त्रं प्रदक्षिणमग्निमानीय तत्रैवोपवेश्य संस्थापयेत् ॥ ततो वरस्य पत्नाद्यजमानानां तिलकं कारयेत् । आशीर्वचांसि ।] तत ऋतुतिथियागादितन्त्रसमाप्तिः ॥

---

पुनरग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ॥ परिस्तीर्य १६ ॥ इदमर्यम्णे इदं गन्धर्वाय इदं त्र्यम्बकायेति लाजाञ्शमीपर्णमिश्राञ्शूर्पे सपवित्रे तस्मिन्नेवाग्नौ संस्कृत्य चतुरञ्जलिमात्रान्संकल्पयेत् ॥ पृश्न्याः पयोसीत्याज्यसंस्कारः । [यजमानस्यैवाज्यद-

---

१ शृणोमीतिपाठान्तरम् ।

र्शनम्] आत्मनो० कन्योद्वाहनिमित्तं अर्यम्णे गन्धर्वाय त्र्यम्ब-
काय अग्नये वैश्वा० इदमाज्यमर्प० ॥ आज्यभागान्तं हुत्वा ।
य इमे द्यावा इति चतस्रः । य इमे द्यावा० । यस्येमे विश्वे० । आ-
पो ह यन्महती० । आ नः प्रजां० । ॐभूःस्वाहेतिमहाव्याहृतयः।
ॐभूः स्वाहा ॐभुवः स्वाहा ॐस्वः स्वाहा ॐभूर्भुवःस्वः स्वा-
हा ॥ (अग्न आयूंषि–इत्यग्निपावमानीभिस्तिसृभिः अग्नौ हुत्वा२
सम्पातांश्च मूर्ध्नि जुहुयात्) ॥ अग्न आयूंषि० इत्यग्नौ ॥ या ते
पतिघ्नी तनूरपतिघ्नीं ते तां करोमि स्वाहा इतिवधूमूर्धनि ॥ अ-
ग्निर्ऋषिः पव० इत्यग्नौ । या तेऽपुत्रिया तनूः पुत्रियां ते तां क-
रोमि स्वाहा इतिमूर्ध्नि ॥ अग्ने पवस्व० इत्यग्नौ ॥ या तेऽपशव्या
तनूः पशव्यां ते तां करोमि स्वाहा इतिमूर्ध्नि ॥ ततोऽग्नये जनि-
विदे स्वाहा । सोमाय जनिविदे स्वाहा । गन्धर्वाय जनिविदे स्वा-
हा ॥ आयुषः प्राणमित्यादि० । तेजोसि इति द्वादशगृहीतेन आ-
कूतंचेत्यादि० ॥ तेजोसि ४ । बृहस्पतिपुरोहिता० इत्यादि । (स्रुवेण)

ऋताषाड् ऋतधामा० इत्यादि० ॥ अग्निर्भूता० । यमःपृथिव्या० । वायुरन्त० । सूर्यो दिवो० । चन्द्रमा नक्ष० । विष्णुर्दिशा० । पूषा प० । त्वष्टा रूपा० । सविता प्रस० । इन्द्रो ज्येष्ठाना० । मित्रः सत्या० । वरुणो ध० । रुद्रः पशूनां० । बृहस्पतिर्ब्रह्म० । ब्राह्मणो वाचा० । सोम ओषधीनां० । समुद्रः स्रवन्त्यानां० । अन्नं सामाज्यानामधिपतिस्तन्मावतु तस्मै स्वाहा । गायत्री छन्दसामधिपत्नी सा मावतु तस्यै स्वाहा । मरुतो गणानां अधिपतयस्ते मावन्तु तेभ्यः स्वाहा । पितरः पितामहाः परेऽवरेभ्यस्ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मण्यस्मिन्कर्मण्यस्मिन् क्षेत्रेऽस्यामाशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा ॥ आकूत्यै त्वा० । कामाय त्वा० । समृद्धै त्वा० । हिरण्यगर्भः० १ । यः प्राणतो० २ । य ओजोदा० ३ । येन द्यौरुग्रा० ४ । इत्यन्तं जुहुयात् ।

(तत उत्तरेणाग्निं वधूवरावानीय पश्चादग्नेर्दर्भेषूपवेश्य सा त्वमसीति वरं वाचयति) ॥ सा त्वमस्यमोऽहममोऽहमस्मि सा

त्वम् । ता एहि विवहावहै पुंसे पुत्राय कर्तवे । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ (अग्निमभिदक्षिणमानीय उभौ प्राङ्मुखा अवस्थाप्य एह्यश्मानमिति वरं दक्षिणेन पदाश्मानमास्थापयति) ॥ एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वेदेवा आयुष्टे शरदः शतमिति ॥ (आतिष्ठेममिति वधूम्) । आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुवस्यवस्सहस्व पृतन्यतः इति । (ततो वध्वा अञ्जलौ ऋत्विगाज्यस्योपस्तृणाति । इदं हविरितिलाजान्वरोऽभिमृशति) ।

(लाजभोय) इदं हविः प्रजननं मे अस्तु० ॥ (अथास्यै शमीपर्णमिश्रांल्लाजानञ्जलिना प्राजापत्यतीर्थेनावपति भ्राता ब्रह्मचारी वा कश्चित् ।) (तानविच्छिन्दती जुहोति अर्यमणन्नु देवमिति वदन्ती वधूः) अर्यमणन्नु देवं कन्या अग्निमयक्षत । सोऽस्मान्देवो अर्यमा प्रेतो मुञ्चातु मामुष्य गृहेभ्यः स्वाहा ॥ (अमुष्येति वरस्य षष्ठ्यन्तं नाम गृह्णाति वधूः ।)

(अग्निर्मा जनिमानिति वरं वाचयति गुरुः ॥) अग्निर्मा जनिमाननया जनिमन्तं करोतु । जीवपत्निर्भूयासम् ॥ (इयंनारीति सर्वत्रानुषजति) । इयं नार्युपब्रूते तोकुमान्यावपन्तिका । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम ॥ इति ॥

(एवं द्विरुत्तरं पर्ययणे पर्ययणे [प्रदक्षिणमावृत्य] लाजाहोमो यजमानं चाश्मानं चास्थापयति ।) एह्यश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्तु विश्वेदेवा अयुष्टे शरदः शतम् । आतिष्ठेममश्मानमश्मेव त्वं स्थिरा भव । प्रमृणीहि दुवस्यवः सहस्व पृतन्यतः ॥ (गन्धर्वमितिवदन्ती वधूर्लाजाञ्जुहोति) । गन्धर्वं पतिवेदनं कन्या अग्निमयक्षत । सोऽस्मान्देवो गन्धर्वः प्रेतो मुञ्चातु मामुष्य गृहेभ्यः स्वाहा ॥ [इति द्वितीयो होमः]। (सोमो मा ज्ञातिमानिति वरं वाचयति गुरुः) ॥ सोमो मा ज्ञातिमाननया ज्ञातिमन्तं करोतु । जीवपत्निर्भूयासमियं नारीति सानुषङ्गः ॥ इयं नार्युपब्रूते तोकमान्यावपन्तिका । दीर्घायु-

रस्तु मे पतिरेधन्तां ज्ञातयो मम ॥ प्रदक्षिणमावृत्य एह्यश्मानमातिष्ठेति पूर्ववदेव ॥ त्र्यम्बकमिति वधूः ॥ त्र्यम्बकं यजामहे सुगन्धिं पतिपोषणम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामुष्य गृहेभ्यः स्वाहा ॥ (इति तृतीयो होमः)॥ पूषामेति वरं वाचयति गुरुः ॥ पूषा मा पशुमाननया पशुमन्तं करोतु । जीवपत्नीर्भूयासमियन्नारीति सानुषङ्गः । इयं नार्युपब्रूते लोकमान्यावपन्तिका । दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम॥

(वधूवरौ चोपवेश्य) मारुता वातहोमाश्च लाजाहोमाश्च नित्यशः । आसीनेन न होतव्या आघारो दक्षिणस्तथा ॥ [शुक्रज्योतिश्च चित्रज्योतिश्चेत्यादयश्च मस्थानके मारुतहोमाः । ततः समुद्रो नभस्वानार्द्रदानः शम्भुरित्यादयो वातहोमाः ॥ ऊर्ध्वो अध्वरो दिविस्पृगित्याघारो नाम यज्ञः] ॥ तत ऋतुतिथियागादि येन रक्षांसि दाशुष इत्यन्तम् ॥ सावित्राणि० अर्यम्णे गन्धर्वाय त्र्यम्बकाय नमो नै० ॥ इळामग्ने० इति शूर्पेण ॥ (शिष्टान् स्विष्टकृते

जुहोति शूर्पेण कर्ता) (वरोदक्षिणाम्, अथवा वरो दक्षिणा)
[वरं गां तु विजानीयाच्चतुर्वर्षामिति श्रुतिः । दक्षिणानां विशि-
ष्टं तु वरं तमपरेऽब्रुवन्] ॥ त्वन्नोअग्ने०, इत्यादि० । मा-
नोज्योतिरितिसप्तांते ॥ (तूष्णीं हस्तौ विमुच्य) । (वि ते
मुञ्चामीति होमकर्ता वध्वाः सन्नहनं विमुच्यमानमनुमन्त्रयते
मन्त्रलिङ्गात्) ॥ वि ते मुञ्चामि रशनां वि रश्मीन्वि योक्त्राणि
परिचर्तनानि । दत्त्वायास्मभ्यं द्रविणेह भद्रं प्र मा ब्रूताद्भागदां
देवताभ्यः ॥ तत उत्तरतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयत्येक-
मिषे, द्वे ऊर्जे, त्रीणि रायस्पोषाय, चत्वारि मयोभवाय, पञ्च प्र-
जाभ्यः, षडृतुभ्यः, दीर्घायुत्वाय सप्तमं, "सखा सप्तपदा भव
सुमृळीका सरस्वति मा ते व्योम सन्दृशे (शि) विष्णुस्त्वान्वेतु,,
इत्येवं सप्तमं पदं यावदनुषङ्गः । (तच्चक्षुरित्यादित्यमुपस्थापयति)।
तच्चक्षुर्देवहितं पुरस्तात्० ॥ (नोदकेन नवा वाचा कन्यायाः प-
तिरुच्यते । पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥)

(अस्तमितेऽग्निम्) (रात्रौ विवाहे तच्चतुरिति अग्निमुपस्थापयेत् इत्यर्थः) ॥ जीवन्तीं पश्यसि, पश्यामि ॥ ध्रुवं पश्यसि, पश्यामि ॥ स्वस्त्यात्रेयं पश्यसि, पश्यामि ॥ अरुन्धतीं पश्यसि, पश्यामि (एतेषां पश्यसीत्याह ऋत्विक्, पश्यामीति वधूः प्रत्याह) ॥ सुमङ्गलीरियं वधूरिमां समेत्य पश्यत । सौभाग्यमस्यै दत्त्वायाऽथास्तं विपरेतनेति वीक्षितानुमंत्रयते ॥ [उदुत्तममिति प्रागुदीचीमावसथं यतीमनुमंत्रयते । यतो वा स्यात् ॥] उदुत्तममारोहन्ती व्यस्यन्तीव पृतन्यतः । मूर्धानं पत्युरारोह प्रजया च विराड्भव ॥ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशङ्कृधि ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥ स्नुषाणां श्वशुराणां च प्रजायाश्च धनस्य च । पतीनां देवराणां च सजातानां विराड्भव ॥ (ततो जयवार्तिकपारणानि अर्थात् वध्वा भिक्षापात्रे दध्यक्षोटयुक्ते वरयजमानद्वयरूप्य-

कार्पणम् ॥ ) ( पंचमस्थानं ) ॥ [ तदनु सूर्यवर्गान्पठित्वा ब्राह्मणपूजनं कुर्यात् ] ॥



सत्येन सप्तचत्वारिंशत्सावित्रीसूर्यात्मदैवतमानुष्टुभं पञ्चभिः सोममस्तौत्पराभिः स्वविवाहं सप्तदश्याद्देवान्परया सोमार्कौ परया चन्द्रमसं परा नॄणां विवाहमन्त्राशीःप्राया नवोनवस्तिस्रोऽनृच्चरा गृभ्णामीति द्वे यदश्विनापूषाघोरचक्षुरिति त्रिष्टुभस्तृष्टसुरोबृहती पूर्वापरमिह प्रियमानःप्रजां जगत्यः ॥ संसृष्टामिति विज्ञेयाः सौर्याः पञ्चाशतमृचः । अध्येयास्ता विवाहेषु नायुग्भिर्वेदपारगैः ॥ संसृष्टन्धनमुभयं समाकृतमस्मभ्यन्धत्तां वरुणश्च मन्युः । भियन्दधाना हृदयेषु शत्रवः पराजितासो अपनिलयन्ताम् ॥ १ ॥ सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः । ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः ॥ २ ॥ सोमेनादित्या बलिनः सोमेन पृथिवी मही । अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ ३ ॥ सोमं मन्यते पपिवान्यत्संपिशन्त्योषधिम् । सोमं

यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥ ४ ॥ आच्छद्विधानैर्गुपि-
तो बार्हतैः सोम रक्षितः । ग्राभ्णामिच्छृण्वन्तिष्ठसि न ते अ-
श्नाति पार्थिवः ॥ ५ ॥ यत्त्वा देवं प्रपिबन्ति तत आप्यायसे
पुनः । वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥ ६ ॥
रैभ्यासीदनुदेयी नाराशंसी न्योचनी । सूर्याया भद्रमिद्वासो गा-
थयैति परिष्कृता ॥ ७ ॥ चित्तिरा उपबर्हणञ्चक्षुरा अभ्यञ्जनम् ।
द्यौर्भूमिः कोश आसीद्यदयात्सूर्या पतिम् ॥ ८ ॥ स्तोमा आ-
सन्प्रतिधयः कुरीरञ्छन्द ओपशः । सूर्याया अश्विना वराग्निरा-
सीत्पुरोगवः ॥ ९ ॥ सोमो वधूयुरभवदश्विनास्तामुभा वरा ।
सूर्यां यत्पत्ये शंसन्तीम्मनसा सविताददात् ॥ १० ॥ मनो अ-
स्या अन आसीद् द्यौरासीदुत च्छदिः । शुक्रावनड्वाहावास्तां य-
दयात्सूर्या गृहम् ॥ ११ ॥ ऋक्सामाभ्यामभिहितौ गावौ ते सा-
मनावितः । श्रोत्रे ते चक्रे आस्तान्दिवि पन्थाश्चराचरः ॥ १२ ॥

---

१ पार्थिवः । २ सोम ।

शुची ते चक्रे यात्या व्यानो अक्ष आहतः । अनो मनस्मयं सूर्या रोहत्प्रयती पतिम् ॥ १३ ॥ सूर्याया वहतुः प्रागात्सविता यमवासृजत् । मघासु हन्यन्ते गावोर्जुन्योपर्युह्यते ॥ १४ ॥ यदश्विना पृच्छमानावयातन्त्रिचक्रेण वहतुं सूर्यायाः । विश्वे देवा अनु तद्वामजानन्पुत्रः पितेरावबृणीत पूषा ॥ १५ ॥ यदयातं शुभस्पती वरेयं सूर्यामुप । कैकं चक्रं वामाऽऽसीत्क देष्ट्राय तस्थथुः ॥ १६ ॥ द्वे ते चक्रे सूर्ये ब्रह्माण ऋतुथा विदुः। अथैकं चक्रं यद्गुहा तदद्धातय इद्विदुः ॥ १७ ॥ सूर्यायै देवेभ्यो मित्राय वरुणाय च । ये भूतस्य प्रचेतस इदन्तेभ्योऽकरन्नमः ॥ १८ ॥ पूर्वापरञ्चरतो माययैतौ शिशू क्रीडन्तौ परि यातो अध्वरम् । विश्वान्यन्यो भुवनाभिचष्ट ऋतूंरन्यो विदधज्जायते पुनः ॥ १९ ॥ नवो नवो भवति जायमानोऽह्नाङ्केतुरुषसामेत्यग्रम् ।

---

१ मघासु हन्यन्ते गावः फल्गुनीषु व्युह्यते । २ पितरमवृणीत । ३ तस्थतुः । ४ (विश्वान्यो भुवनाविचष्ट) ।

भागन्देवेभ्यो विदधात्यायन्प्र चन्द्रमास्तिरतेदीर्घमायुः ॥ २० ॥
सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् । आरो-
ह सूर्ये अमृतस्य लोकं स्योनम्पत्ये वहतुङ्कृणुष्व ॥ २१ ॥ उदी-
र्ष्वातः पतिवती ह्येषा विश्वावसुर्नमसा गीर्भिरीडे । अन्यामि-
च्छ पितृषदं व्यक्तां स ते भागो जनुषा तस्य विद्धि ॥ २२ ॥
उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा । अन्यामिच्छ प्रफर्व्यं
सञ्जायां पत्यां सृज ॥ २३ ॥ अनृत्तरा ऋजवः सन्तु पन्थायेभिः
सखायो यन्ति नो वरेयम् । समर्यमा सं भगो नो निनीया-
त्सञ्जास्पत्यं स्वयममस्तु देवाः ॥ २४ ॥ प्र त्वा मुञ्चामि वरुण-
स्य पाशाद्येन त्वाबध्नात्सविता सुशेवाः । ऋतस्य योनौ सुकृ-
तस्य लोके रिष्टान्त्वा सह पत्या दधामि ॥ २५ ॥ प्रेतो मुञ्चा-
मि नामुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वः सुपुत्रा सु-
भगा सति ॥ २६ ॥ पूषा त्वेतो नयतु हस्तगृह्याश्विना त्वा

१ वहतुं । २ पन्थानो ।

प्र वहतां रथेन । गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विद-
थमा वदासि ॥ २७ ॥ इह प्रियं प्रजया ते समृध्यतामस्मिन्गृ-
हे गार्हपत्याय जागृहि । एना पत्या तन्वं सं सृजस्वाथाजिव्रि
विदथमा वदाथः ॥ २८ ॥ नीललोहितं भवति कृत्या सक्तिर्व्य-
ज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यते ॥ २९ ॥ परा
देहि शामुल्यं ब्रह्मभ्यो वि भजा वसु । कृत्यैषा पद्वती भूत्वा
जाया विशते पतिम् ॥ ३० ॥ अश्रीरातनूर्भवति रुशती पापया-
ऽमुया । पतिर्यद्वध्वो वाससा स्वमङ्गमभिधित्सते ॥ ३१ ॥ ये
वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनामनु । पुनस्तान्यज्ञिया देवा
नयन्तु यत आगताः ॥ ३२ ॥ मा विदन्परिपन्थिनो य आसी-
दन्ति दम्पती । सुगेभिर्दुर्गमतीतामप द्रान्त्वरातयः ॥ ३३ ॥
सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै दत्वा यः
थास्तं विपरेतन ॥ ३४ ॥ तृष्टमेतत्कटुकमेतदऽपाष्ठवद्विषवन्नैतदत्तवे।

---

१ स्वाथ जिर्विविदथमा वदासि । २ अश्लीला ।

सूर्यां यो ब्रह्मा विद्यात्स इद्वाधूयमर्हति ॥ ३५ ॥ आशसनं वि-
शसनमथो अद्य विकर्तनम् । सूर्यायाः पश्य रूपाणि तानि ब्र[1]-
ह्मोत शुम्भति ॥ ३६ ॥ गृभ्णामि ते सौभगत्वाय हस्तौ मया
पत्या जरदष्टिर्यथासत् । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वा-
दुर्गार्हपत्याय देवाः ॥ ३७ ॥ तां पूषञ्छिवतमामेरयस्व यस्यां
बीजं मनुष्या वपन्ति । या न ऊरू उशती विश्र[2]याति यस्या-
मुशन्तः प्रहराम शेपम् ॥ ३८ ॥ तुभ्यमग्रे पर्यवहन्त्सूर्यां वह-
तुना सह । पुन[3]ः पतिभ्यो जायान्दा अग्ने प्रजया सह ॥ ३९ ॥
पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पति
र्जीवाति शरदः शतम् ॥ ४० ॥ सोमः प्रथमो विविदे गन्धर्वो
विविद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यज[4]ः ॥
४१ ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये । रयिञ्च पुत्रांश्चा-
दादग्निर्मह्यमथो इमाम् ॥ ४२ ॥ इहैव स्तम्मा वि यौष्टं विश्व-

---

१ ब्रह्मा तु शुन्धति । २ याते । ३ सनः । ४ जाः ।

मायुर्व्यश्नुतम् । क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ४३ ॥
आ वां प्रजाञ्जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्ग-
ली पतिलोकमाविश शन्नो भव द्विपदे शञ्चतुष्पदे ॥ ४४ ॥
अघोरचक्षुरपतिघ्न्यधिशिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसू-
र्देवृकामा स्योना शन्नो भव द्विपदे शञ्चतुष्पदे ॥ ४५ ॥ इमा-
न्त्वमिन्द्र मीढ्वः सुपुत्रां सुभगाङ्कृणु । दशास्यां पुत्रानाधेहि प-
तिमेकादशङ्कृधि ॥ ४६ ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां
भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥ ४७ ॥ स-
मञ्जन्तु विश्वे देवाः समापो हृदयानि नौ । सम्मातरिश्वा स-
न्धाता समुदेष्ट्री ददातु नौ ॥ ४८ ॥ ध्रुवोऽधिपुष्यामयि मह्यन्त्वा
दाद्बृहस्पतिः । मया पत्या प्रजावती सञ्जीव शरदः शतम् ॥
४९ ॥ विहिसोतोरऽसृक्षत नेन्द्रन्देवममंसत । यत्रामदद्वृषाक
पिरऽर्य्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥ ५० ॥ नमो

श्री

---

१ रहोरात्राभ्यां । २ माविशेमं ।

ब्रह्मणे इतिच परिधानीयांस्त्रिरुक्त्वा सूर्यवर्गं समाप्य कन्यापितरं ब्राह्मणपूजनं कारयेत् ॥



गायत्र्यै नमः ओंभूर्भुवःस्वस्तत्स० ३ ॥ ओंतत्सदद्य० अग्नेर्यविष्ठस्येत्यादीनां तथाऽग्नेः पुष्टिपतेः प्रजापतेरर्यम्णो गन्धर्वस्य त्र्यम्बकस्य विवाहोद्वाहदेवतानां आत्मनो वाङ्मनः० कन्योद्वाहनिमित्तमर्चामहं करिष्ये ओंकुरुष्व ॥ इत्यादि सर्वं दक्षिणान्तं कार्यम् । अच्छिद्रं ॥ आश्रावितं० इत्यादि सर्वं । विमुच्य । नयामि ॥

---

अथाग्निं परिसमुह्य पर्युक्ष्य परिषिच्य परिस्तीर्य ॥ आदौपंच० ॥ १६ ॥ नास्ति.निर्वपणम् । पृश्न्याः पयो० । आज्यदर्शनं वधूवरयोः । आत्मनो वाङ्म० अग्नये वायवे सूर्याय चन्द्रमसे विष्णवे प्रायश्चित्तयागदेवताभ्यः इदमाज्यं० ॥ आज्यभागान्तं हुत्वा ॥ [उलपराजीं स्तृणात्याशयनीयात्तया प्रविशत्यऽध्याहिताग्निं सोदकं सौषधमावसथं प्रतिपद्यते । रो-

ह्विएया मूलेन वा यद्वा पुएयोक्तमपरेणाग्निमानडुहे रोहिते चर्म-
एयुपवेश्यापिवा दर्भेष्वेव । जयप्रभृतिभिर्हुत्वा ॥] [अग्निरैतु प्र-
थम इत्याद्यैः पञ्चदश स्रुवेणाज्याहुतीर्वरो वध्वा सहोपविश्य जु-
होति । त्र्यायुषमिति पञ्चदशी ॥] अग्निरैतु प्रथमो देवतानां
सोऽस्याः प्रजां नयतु सर्वमायुः । तदयं राजा वरुणोऽनुमन्यतां
यथेयं स्त्री पौत्रमघन्निरुन्ध्यात्स्वाहा ॥ १ ॥ अग्निरिमां त्रायतां
गार्हपत्यः सोऽस्याः प्रजां मुञ्चतु मृत्युपाशात् । अरिक्तोपस्था
जीवतामस्तु माता पौत्रमानन्दमभिविबुद्ध्यतामियं स्वाहा ॥२॥
मा ते गृहे निशि घोर उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु । जी-
वपुत्रा पतिलोके विराज पश्यन्ती प्रजां सुमनस्यमानां स्वाहा
॥ ३ ॥ मा ते कुमारः स्तनधः प्रमायि मा त्वं विकेश्युर आ-
वधिष्ठाः । स्तनन्धयन्ते सविताभिरक्षत्वा वाससः परिधानाद्-
बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु नित्यं स्वाहा ॥ ४ ॥ अग्ने प्राय-
श्चित्ते त्वन्देवानां प्रायश्चित्तिरसि यास्यां भृशा तनूस्तामस्या ना-

शय स्वाहा ॥ ५ ॥ (एवं) वायो प्रायश्चित्ते० ॥ ६ ॥ सूर्य प्रायश्चित्ते० ॥ ७ ॥ चन्द्र प्रा० ॥ ८ ॥ विष्णो प्रा० ॥ ९ ॥ विष्णो प्रा० ॥ १० ॥ चन्द्र प्रा० ॥ ११ ॥ सूर्य प्रा० ॥ १२ ॥ वायो प्रा० ॥ १३ ॥ अग्ने प्रा० ॥ १४ ॥ त्र्यायुष्यं, जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषम् ॥ १५ ॥ (आज्यस्यैकदेशे दध्यासिच्य दधिक्राव्ण इति त्रिर्दधि भक्षयित्वा) । (वधूमितिदेवपालः । स्वयमपि प्राश्येत्यन्ये) । नारायणस्यार्षम् ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥

[माणवकाय वध्वा उत्सङ्गे स्थिताय वर इळामग्न इति फलानि प्रददाति] ॥ इळामग्ने इति विश्वामित्रस्य ॥ इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ (ततो वैश्वदेव्याग्नेय्या वा चतुर्गृहीतेन प्रधानम्) ॥ तेजोसि० ॥ विहव्यस्या-

ङ्गिरसस्य ॥ ये के च ज्मा० ॥ तत ऋतुंतिथियागादितन्त्रसमा-
प्तिः ॥ तदनु ब्राह्मणपूजनं कुर्यात् ॥ गायत्र्यै नमः
ॐभूर्भुवःस्वस्तत्सवितुः ३ ॥ अद्य तावत्० अग्नेर्यविष्ठस्य० । अ-
ग्नेः वायोः सूर्यस्य चन्द्रमसः विष्णोः प्रायश्चित्तदेवतानां आत्म-
नोवाङ्मनः० आत्मोद्वाहनिमित्तमर्चामहं करिष्ये । ओंकुरुष्व ॥
इत्यादि दक्षिणान्तं कृत्वा पूर्ववदच्छिद्रं च विधाय आश्रावितमि-
ति पूर्णां दद्यात् विमुच्य नयामि ॥



अग्निं परिसमुह्य पर्युक्ष्य परिषिच्य ॥ चातुष्कोष्ठैः स्तरैः प-
रिस्तीर्य ॥ (तूष्णीमुपचरितं स्थालीपाकं श्रपयित्वा तस्याग्निमि-
ष्ट्वा प्रजापतिं च शेषं प्राश्नीतः) ॥ चरुं शृतमभिघार्योदगुद्वास्य
अग्नये स्वाहा प्रजापतये स्वाहा ॥ अग्निं विमुच्य ॥ नयामि ॥ धर्मं
देहि० ॥ क्षेत्रेशबलिः ॥ योऽस्मिन्निवसतीति० ॥

अन्नमेव विवननमन्नं संवननं स्मृतम् । अन्नं पशूनां प्राणो-

ऽन्नं (अन्नं) ज्येष्ठं भिषक्स्मृतम् ॥ अन्नमयेन मणिना प्राणसूत्रेण पृश्निना । सिनोमि सत्यग्रन्थिना हृदयं च मनश्चते ॥ सह वाचा मनो अस्तु सह चित्तं सह व्रतम् । चक्रमिवानडुहः पदं मामेवान्वेतु ते मनः ॥ मां चैव पश्य सूर्यं च मा चान्येषु मनःकृथाः । चाक्रवाकं संवननं-ममचामुष्याश्च भूयादिति । (वध्वाः षष्ठ्यन्तं नाम ग्राह्यम्) ॥

---

[ओंसंवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रीः षट्तिस्र एकां वाऽनस्संविशतः] ॥

(स्त्र्याह ॥) अपश्यन्त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम ॥ (पतिः ॥) अपश्यन्त्वा मनसा दीध्यानां स्वायान्तनू ऋत्व्ये नाधमानाम् । उप मामुच्चा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रकामे ॥ (स्त्री ॥) प्रजापते तन्वस्मे जुषस्व त्वष्टर्देवेभिस्सहसा न इन्द्रः । विश्वैर्देवैर्यज्ञियैस्संविदानः पुंसां बहूनां मातरस्स्याम ॥ (पतिः ॥) अहङ्गर्भमादधामोषधीष्वहं विश्वेषु भुव-

नेष्वन्तः । अहम्प्रजा अजनयं पृथिव्यामहञ्जनिभ्यो अवरीषु पु-
त्रानिति स्त्र्यादि-व्यत्यासञ्जपतः । [एवमेवतौ प्रजाकामौ संविश-
तः ॥ करदितिभसदमभिमृशति ॥ भसदित्युपरिजननम् ॥ बृह-
दितिजातम् ॥] ज्योत्कारं क्रमते चैव स्वस्तिना
परिपठ्यते । विप्रेण ह्याशिषं कुर्याद्विष्णुर्वचनमब्रवीत् ॥ विष्णुर्वा
त्रिपुरान्तको भवतु वा ब्रह्मा सुरेन्द्रोऽथवा भानुर्वा शशलक्षणो-
ऽथ भगवान्बुद्धोऽथ सिद्धोऽथवा । रागद्वेषविषार्त्तिमोहरहितस्स-
त्त्वानुकम्पोद्यतो यस्सर्वैस्सह संस्कृतो गुणगणैस्तस्मै नमः सर्व-
दा ॥ १ ॥ प्रसन्नमूर्तिः स्थिरमन्त्रविग्रहः समग्रशक्तिर्जगदेकबान्ध-
वः । उमापतिः खण्डशशाङ्कशेखरो जयत्यनाथार्तिहरो महेश्वरः॥
२ ॥ गायत्री ब्रह्मणो यद्वल्लक्ष्मीर्दैत्यरिपोर्यथा । उमा यथा महे-
शस्य तथा त्वं भव भर्तरि ॥ ३ ॥ सुवर्चला यथार्कस्य यथा
चन्द्रस्य रोहिणी । मदनस्य रतिर्यद्वत्तथा त्वं भव भर्तरि ॥ ४ ॥
सुदक्षिणा दिलीपस्य वसन्तस्य धृतिर्यथा । अरुन्धती वसिष्ठस्य

तथा त्वं० ॥ ५ ॥ रामस्य च यथा सीता विनता कश्यपस्य च। पावकस्य यथा स्वाहा तथा त्वं० ॥ ६ ॥ उषा यथाऽनिरुद्धस्य दमयन्ती नलस्य च। सती च ऋतुपर्णस्य तथा त्वं० ॥ ७ ॥ यथा गौरी महेशस्य यथा स्वर्गपतेश्शची। यथा श्रीः श्रीधरस्यैव तथा त्वं० ॥ ८ ॥ पुलोमजा यथेन्द्रस्य यथागस्त्यस्य रोहिणी। देवकी वसुदेवस्य तथा त्वं० ॥ ९ ॥ शन्तनोश्च यथा गङ्गा सुभद्रा ह्यर्जुनस्य च। धृतराष्ट्रस्य गान्धारी तथा त्वं० ॥ १० ॥ धनपुत्रवती साध्वी सततं भर्तृवल्लभा। मनोज्ञा ज्ञानसहिता तिष्ठ त्वं शरदां शतम् ॥ ११ ॥ यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ। रोहिणी च यथा चन्द्रे दमयन्ती यथा नले ॥१२॥ यथा वैश्रवणे भद्रा वसिष्ठे वाप्यरुन्धती। यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तरि ॥ १३ ॥ जीवसूर्वीरसूर्भद्रा बहुसौख्यसमन्विता। सुभगा भोगसंपन्ना यज्ञपत्नी मनोव्रता ॥ १४ ॥ अतिथीनागतान्साधून्बालान्वृद्धान्गुरूनपि। पूजयन्त्या यथान्यायं

शश्वद्गच्छन्तु ते समाः ॥ १५ ॥ पृथिव्यां यानि रत्नानि गुणव-
न्ति गुणान्विते । तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां श-
तम् ॥ १६ ॥ लक्ष्मीर्यथा सकलदेवगणारिशत्रौ गौरी यथा प-
शुपतौ च शची सुरेन्द्रे । गायत्र्यपीह परमेष्ठिनि नित्यरक्ता तद्व-
द्भव त्वमपि भर्तरि नित्यरक्ता ॥ १७ ॥ सीता यथा दशरथस्य
सुते प्रवीरे प्रीतिर्यथा स्तुतिकरे च रतिश्च कामे । सूर्येऽनुरक्तह-
दयाथ सुवर्चला सा तद्वद्भव त्वमपि० ॥ १८ ॥ सा रोहिणी
निगदिता च यथा शशाङ्के नित्यं यमेऽप्यथ यमी च यथानुरक्ता ।
हंसावली नृपसुता कमलाकरे वा तद्वद्भव० ॥ १९ ॥ बाणाख्य-
दैत्यतनया च यथानिरुद्धे यद्वन्नले नरपतौ दमयन्त्यपीह । स्वा-
हा यथा हुतभुजीह सदानुरक्ता तद्वद्भव० ॥ २० ॥ सुदक्षिणा
चापि नृपे दिलीपे ह्यरुन्धती चापि मुनौ वसिष्ठे । गाढानुरक्ता
भवतीह यद्वत्तद्वद्भव० ॥ २१ ॥ यद्वल्लक्ष्मीमधुमथनयोः पद्मि-
नीसूर्ययोर्वा यद्वन्नित्यं रजनिशशिनोः पत्त्रिणोश्चक्रनाम्नोः । गाढ-

प्रेम्णो भवति शिवयोः सुप्रसिद्धिश्च यद्वज्जायापत्योर्भवतु युवयोस्तद्वदेवात्र लोके ॥ २२ ॥ अतिरमणीयाकृत्योस्समवयसोः प्रोल्लसत्प्रेम्णोः । वधूवरयोर्नूनं पाणिग्रहणं शिवायास्तु ॥ २३ ॥ यन्मङ्गलं शैलसुताविवाहे हरस्य दत्तं कमलासनेन । तन्मङ्गलं देव विवाहकाले ददामि ते देवमुनिप्रणीतम् ॥ २४ ॥ पद्मामाधवयोर्नगेन्द्रतनयानागेन्द्रकेयूरयोः स्वाहापावकयोरमर्त्यतटिनीकल्लोलिनीनाथयोः । पौलोमीपुरुहूतयो रतिरतिप्राणेशयोः प्रेमवद्दम्पत्योर्युवयोश्चिरं भवतु तत्सौभाग्यभाग्योदयः ॥ २५ ॥ अक्षतौषधितिलाश्च शाद्वला धूपदीपकुसुमानि चन्दनम् । माक्षिकं दधि सशर्करं पयो मङ्गलं ददतु वोऽभिषेकजम् ॥ २६ ॥ धातृकेशवशिवास्सुपूजिताः षण्मुखोऽथ मदनो विनायकः । अश्विनौ धनपतिर्विभावसुर्मङ्गलं० ॥ २७ ॥ शक्रवह्नियमनैर्ऋताप्पतिमातरिश्वनरवाहनादयः । शम्भुपद्मजहलायुधास्सुरा मङ्गलं० ॥ २८ ॥ अत्रिकश्यपवसिष्ठगौतमा व्यासगालव पुलस्त्यकौशिकाः । गाधि-

नन्दनकणादशौनका मङ्गलं० ॥ २६ ॥ सूर्यसोमकुजचन्द्रनन्दना
जीवशुक्रशनिराहुकेतवः । पत्निरूपघटजौ च ये ग्रहा मङ्गलं०
॥ ३० ॥ मेषगोमिथुनकर्कटास्तथा सिंहकन्यतुलकीटधन्विनः ।
मार्गकुम्भजलजास्तु राशयो मङ्गलं० ॥ ३१ ॥ मार्गपौषतपफा-
ल्गुना मधुराधशुक्रशुचयस्तथा नभाः । भाद्र आश्वयुजकार्तिका-
वमी मङ्गलं० ॥ ३२ ॥ मेरुमन्दरहिमाद्रिरैवता विन्ध्यसह्यमल-
याख्यदुर्दुराः । गन्धमादनशिवालया अमी मङ्गलं० ॥ ३३ ॥ ता-
र्क्ष्यजैमिनिजटायुजम्पलाश्चित्रसेनद्विजहंसदुर्दुराः । सम्पातिश्छिद-
शवायसोऽरुणो मंगलं० ॥ ३४ ॥ क्षारसिन्धुरसनीरसागराः क्षी-
रसैन्धवगुडास्तथा घृताः । क्षौद्रदुग्धसहिता महार्णवा मङ्गलं०
॥ ३५ ॥ शेषतक्षकमलाहिवासुकि-शङ्खपालफणिपद्मपुष्कराः ।
मानसो विमलनीलनागराड् मङ्गलं० ॥ ३६ ॥ रावणश्च बलि-
दानवो मयः कालकूटदहनो विभीषणः । बाणकंसयवना महा-
बला मंगलं० ॥ ३७ ॥ रामलक्ष्मणदिलीपभार्गवास्सत्यकेतुनल-

भीष्मपाण्डवाः । धर्मदत्तशिविवैन्यकश्यपा मङ्गलं० ॥ ३८ ॥ जानकी सह सुतैररुन्धती मालती शशिमती सुदक्षिणा। द्रौपदी च दमयन्त्यथोर्मिला मङ्गलं० ॥ ३९ ॥ जाह्नवी शशिभवा गोदावरी नर्मदा च यमुना विपाशिका । गण्डकी मधुमती सरस्वती मङ्गलं० ॥ ४० ॥ पार्वती च कमला शची रतिस्सत्यवत्यपि च रोहिणी तथा । कौशिकी च विनताथ देवकी मङ्गलं० ॥ ४१ ॥ स्वर्धेनुर्वृषभो हरस्सुरवधू रम्भाथ कल्पद्रुमो नक्षत्रं तिथिवासरौ क्षणमथो लग्नं मुहूर्तं शुभम् । खं वायुः शशिभास्करौ च धरणिस्तोयं च वह्निः पुमानित्येवं परमेश्वरप्रकृतयः कुर्वन्तु वां मङ्गलम् ॥ ४२ ॥ यावद् द्वीपे तरङ्गैर्वहति सुरनदी जाह्नवी पुण्यतोया यावदाकाशमार्गे तपति दिनकरो भास्करो लोकपालः ॥ यावद्ब्रह्मा च विष्णुः सुरपतिसहितो वर्तते मेरुशृङ्गे तावत्त्वं मर्त्यलोके निजकुलसहितो भुंक्ष्व लक्ष्मीं समग्राम् ॥ ४३ ॥ ब्रह्मा वेदपतिः शिवः पशुपतिः शक्रः सुराणां पतिर्विष्णुर्यज्ञपती रविर्ग्र-

हपतिर्धर्मः पितॄणां पतिः ॥ प्राणो देहपतिः सदागतिरयं ज्यो-
तिष्पतिश्चन्द्रमाः सर्वे ते पतयः कुबेरसहिताः कुर्वन्तु वो मङ्ग-
लम् ॥ ४४ ॥ यां स्कन्दस्य जगाद तारकजये देवः स्वयम्भूः
स्वयं स्वःसाम्राज्यमहोत्सवेऽपिच शचीकान्तस्य वाचस्पतिः । ता-
भिस्तेऽद्य विरिञ्चिवक्त्रसरसीहंसीभिराशास्महे वैदीभिश्च सदा
विवाहसमये मंत्रोक्तिभिर्मङ्गलम् ॥ ४५ ॥ ब्रह्मा हंसाधिरूढो मु-
निगणसहितो वेदवित् सृष्टिकर्ता विष्णुः श्रीशक्तिधर्ता गरुडरथ-
युतः शार्ङ्गचक्रादिहस्तः । रुद्रश्चन्द्रार्धमौलिर्वृषभवरगतो धौतधू-
लीसिताङ्ग आयुःश्रीशक्तिवीर्यं ददतु तव गृहे पुत्रपौत्रादिसौख्य-
म् ॥ ४६ ॥ लक्ष्मीः कौस्तुभपारिजातकतरू धान्वन्तरिश्चन्द्रमा
धेनुः कामदुघा सुरासुरगजो रम्भाथ देवाङ्गना । अश्वः सप्तमु-
खस्तथा हरिधनुः शङ्खो विषं चामृतं रत्नानीति चतुर्दश प्रति-
दिनं कुर्वन्तु वो मङ्गलम् ॥ ४७ ॥ आदित्योऽग्नियुतः शशी स-
वरुणो भौमः कुमारान्वितः । सौम्यो विष्णुयुतो गुरुः समघवा

देव्या युतो भार्गवः । सब्रह्मा रविजो गणेश्वरयुतो राहुर्ध्वजः सेश्वरो मङ्गल्यं सततं हरार्चनरताः कुर्वन्तु सर्वे ग्रहाः ॥ ४८॥ दीर्घायुर्भव जीव वत्सरशतं नश्यन्तु सर्वापदः स्वास्थ्यं संभज मुञ्च चञ्चलधियं लक्ष्म्येकनाथो भव । किं ब्रूमो भृगुगौतमात्रिकपिल व्यासादिभिर्भाषितं यद्रामस्य पुराभिषेकसमये तच्चास्तु ते मङ्गलम् ॥ ४९ ॥ आयुष्मान्भव पुत्रवान्भव भव श्रीमान्यशस्वी भव प्रज्ञावान्भव भूरिभूतिकरुणादानैकनिष्ठो भव । तेजस्वी भव वैरिदर्पदहनव्यापारदक्षो भव श्रीशम्भोर्भव पादपूजनरतः सर्वोपकारी भव ॥ ५० ॥ आयुर्बलं विपुलमस्तु सुखित्वमस्तु सौभाग्यमस्तु विशदा तव कीर्तिरस्तु । श्रीरस्तु धर्ममतिरस्तु रिपुक्षयोऽस्तु सन्तानवृद्धिरभिवाञ्छितसिद्धिरस्तु॥५१॥ यावदिन्द्रादयो देवा यावच्चन्द्रदिवाकरौ । यावद्रामकथा लोके भूयात्तावत् स्थितिस्तव ॥ ५२ ॥ सुरार्चनेन दानेन साधूनां सङ्गमेन च । आशीर्वादेन विप्राणामपमृत्युर्विनश्यतु ॥ ५३ ॥ मं-

आर्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ ५४ ॥ मार्कण्डेयमुनेः स्वर्गवैद्ययोः स्वर्पतेः समम् । आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते ॥५५॥

जीव त्वं शरदां शतम् ॥

कन्दर्पकोटिकमनीयमनोहरश्रीप्राग्भारभास्वर सुरासुरसेविताङ्घ्रे । पूर्णेन्दुबिम्बवदनाशरणार्तिहारिन् त्वां प्रार्थयेऽत्र भगवन्दिश मङ्गलानि ॥ १ ॥ सौवर्णवर्णललिताम्बरकान्तिकान्तः कौमोदकीकमलकम्बुरथाङ्गपाणिः । निस्तन्द्रचन्द्रवदनः कुटिलालको वां नारायणो दिशतु मङ्गलमिन्दिरेशः ॥ २ ॥ योगीन्द्रमृग्यचरणाम्बुजपूतपृष्ठ-श्रीवैनतेयमधिरुह्य विहारशाली । श्रीवत्सलाञ्छन उदारघनोपमो वां श्रेयः परं दिशतु निर्मलहारहारी ॥ ३ ॥ देदीप्यमानमुकुटाङ्गदकुण्डलांशु-दीप्तेर्गलोज्ज्वलमनोरमकौस्तुभाच्च । भ्राजिष्णुमूर्तिरतुलायतलोचनो वां विश्वेश्वरो दिशतु भद्रमदभ्रभद्रः ॥ ४ ॥ क्षीराब्धिमन्दिरगतः सुकुमारतल्पीभूताहिराज-

शयनीयरमाश्रिताङ्घ्रिः । श्रीपद्मनाभ उरुकीर्तिरनुत्तरो वां विश्व-
म्भरः श्रियमुदारतमां बिभर्तु ॥ ५ ॥ गर्भस्थमार्जुनिसुतं कुल-
तन्तुमेकं द्रौण्यस्त्रदग्धमजितान्तकपूजिताङ्घ्रिः । योऽजीवयत्प्रिय-
तमार्जुनभक्तिनिघ्नः कृष्णः स वां च भगवानवतादजस्रम् ॥ ६ ॥
यत्पत्पवित्रभुवनत्रयपावनीं तां गङ्गां शिवोऽप्यवहितोऽवहदुत्त-
माङ्गे । यत्पादधूलिपुनरात्तमनुष्यदेहा–हल्या बभूव स हरिर्हर-
तादघं वाम् ॥ ७ ॥ यो द्रौपदीममिततत्तदपारदुःखां तान्पाण्ड-
वांश्च पुरुघोरविपत्तिदग्धान् । तत्रे त्वरान्वित इवातितरां स कृ-
ष्णः कष्टं त्रिकष्टहरणस्मरणो ह्रियाद्वाम् ॥ ८ ॥ दुर्ग्राहवक्त्रप-
तिताङ्घ्रिमहागजेन्द्रं योऽमूमुचद् द्रुतमपारकृपानिधानः । सर्वेश्व-
रेश्वर उपात्तसुदर्शनो वां मुक्तिं क्रियात्स भगवान्भवघोरपाशात्
॥ ९ ॥ दुष्पारदुर्गतिमहोदधिमध्यमग्नं रङ्कं सतीर्थ्यमनुतप्तमन-
न्यभक्तम् । यः श्रीसुदामसुहृदं हरिरुज्जहार श्वःश्रेयसं दिशतु
वां त्रिजगत्पतिः सः ॥ १० ॥ हीणां रजःप्लुततनुं द्रुपदस्य पुत्रीं

दीनां द्विषत्परिवृतां सदसोऽन्तरे ताम् । योऽनन्तदिव्यवसनैस्त्व-
रयोद्दधार कृष्णः स वां शरणमस्तु शरण्यधुर्यः ॥ ११ ॥ यस्या-
स्ति विश्वमखिलं कृपया स्थितं सन्मात्रः स चैष भगवानखिले-
ष्टदायी । आयुर्निरामयमनन्तसमृद्धिपूर्णं नारायणो दिशतु मंग-
लमंगलो वाम् ॥ १२ ॥ स्निग्धात्कृपातिशयपूर्णकटाक्षलेशाद् य-
स्य स्वतन्त्रमरणा जितकालकक्ष्याः । व्यासादयो भुवि चरन्ति
चिरायुषौ वां सेशः करोतु कुलविस्तृतिकीर्तिमन्तौ ॥ १३ ॥ य-
न्नामसंस्मृतिरपीष्टविधायिनीत्वात् स्वःशाखिदर्पमखिलं दिवि चू-
र्णयन्ती । सोऽयं परात्परतरः पुरुषः पुराणः कामं प्रपूरयतु वां
सकलं दुरापम् ॥ १४ ॥ यत्कीर्तनं कलिमलघ्नमपारघोर–दुःखा-
मयाधिशमने प्रलयाग्निकल्पम् । कीर्तिं सुधानिधिसुधाक्तकलाव-
दातां दिश्यात्स वां शशिकलाभरणार्चिताङ्घ्रिः ॥ १५ ॥ संसार-
दुर्गतिहरं भवतापतप्तनिर्वाणदं त्रिजगतां दुरितार्तिहारि । यो-
गीन्द्रचिन्त्यभगवच्चरणारविन्द–द्वन्द्वं सदास्तु भवतारणकारणं नः

॥ १६ ॥ यं सत्स्वरूपमचलं सकलेष्टपूर्त-दानादिकर्मसु शुभेषु सुदक्षिणेषु । श्रद्धालवः प्रतिभुवं फलदं च मत्वा-सक्ता भवन्ति स ममास्तु सुकर्मसिद्ध्यै ॥ १७ ॥ त्वय्यर्पितं भगवति श्रुतिगीतकीर्ते ! कन्यात्मकं वितरणं विधिनोपपन्नम् । भूयात्कुलद्वयसुखोदयबीजमेतद्दातुर्ग्रहीतुरपि मङ्गलमस्त्वनेन ॥ १८ ॥ आनन्दकन्द सुरमर्दन दीनबन्धो श्रीनन्दनन्दन मुकुन्द सुरेन्द्रवन्द्य । श्रीश्यामसुन्दर परात्पर यादवेन्द्र कारुण्यसिन्धुरसि नोऽनुगृहाण कृष्ण ॥ १६ ॥ हे कृष्ण हे यदुपते शरणागतानां त्राणप्रवीण वसुदेवकुलावतंस । हे देवकीहृदयनन्दन कंसशत्रो श्रीनाथ रक्ष करुणार्द्रदृशा सदा नः ॥ २० ॥



कलशाच्छिद्रं० गायत्र्यै नमः ॐभूर्भुवःस्वः ३ ॥ अद्यतावत्० । महागणपतेः० अग्नेः पुष्टिपतेः प्रजापतेः । अर्यम्णः गन्धर्वस्य त्र्यम्बकस्य विवाहोद्वाहदेवतानां अग्नेः वायोः सूर्यस्य च-

न्द्रमसः विष्णोः प्रायश्चित्तदेवतानां मेषादीनां द्वादशलग्नानां अ-श्विन्यादीनां सप्तविंशतिनक्षत्राणां वासुदेवादीनां विष्णुपञ्चायतनदेवतानां अभयङ्कर्याः० इहराष्ट्राधिपतेर्भैरवस्य इन्द्रस्य वज्रहस्तस्य इत्यादि हेरुकादीनां वटुकादीनां आत्मनो० आत्मोद्वाहनिमित्तं कन्योद्वाहनिमित्तं पूजनं अच्छिद्रं सम्पूर्णमस्तु एवमस्तु । एताभ्योदेव० यवोदकं नमः० । आज्ञा मे दीयतां० । क्षमध्वं० । नमो ब्रह्मणे इति तर्पणम् ॥ उदकलशमुपनिधाय स्वस्त्ययनं वाचयति । उत्तिष्ठ ब्रह्मणस्पते० इत्यादि । मन्त्रार्थाः सफलाः० ॥

इति ब्राह्म विवाहविधिः सम्पूर्णः ॥

---

अरालकुन्तलं वर्हावतंसं मारमोहनम् ।
राधाश्लिष्टं घनश्यामं श्रीकृष्णं शरणं श्रये ॥
अतसीकुसुमोपमेयकान्तिर्यमुनाकूलकदम्बमध्यवर्ती ।
नवगोपवधूदुकूलशाली वनमाली वितनोतु मङ्गलानि ॥

